अविश्रांतौहेतुरविश्वासः ॥ ११ ॥ विरामउपरतंविरक्तमितियावत् ॥ भूरिभंगेभ्योवहुतरविनाशदुःखहेतुभ्यः ॥ धाराभ्यःअवार्षिकजलधाराभ्यः ॥ १२ ॥ कृष्णद्वैपायनं
व्यासम् ॥ १२ ॥ परवंचनार्थंकृत्रिमचेष्टितमाडंवरंकथंकेनक्रमेणअभ्युत्थितमुत्पन्नं ॥ कदावाप्रशममत्यंतोच्छेदं ॥ कियत्देशकालपरिमाणतः ॥ कस्यसंसारःकिंदेहस्यउतइं
द्रियाणामुतमनसःप्राणस्यवाउतसंघातस्यउततदन्यस्यविकारिणोनिर्विकारचिन्मात्रस्यवेतिपप्रच्छेतिपूर्वेणान्वयः ॥ १४ ॥ विदितात्मनाव्यासेनअखिलंवक्तव्यंयथावत्प्रोक्त
मित्यन्वयः ॥ १५ ॥ आअज्ञासिपमितिच्छेदः ॥ ननुयत्रप्राकृत्वविचारेणैवज्ञातस्यस्मरणार्थोयंआङ्इतिनिपातस्तर्हिवाक्यस्मरणयोरङिदित्यनाङ्त्वान्निपातएकाजनाङितिप्रगृह्यत्वेप्रकृतिभावोन्याय्यः ॥ सत्यम् ॥ तथापिपूर्वंआसमंताद्विशिष्याज्ञासिपमितिधात्वर्थातिशयद्योतकतयाक्रियायोगस्यापिविवक्षितत्वात्तन्नैकशेपादिनाआङोपिसंमहा

स्वयंप्राप्तेपरेवस्तुन्यविश्रांतमनाःस्थितः ॥ इदंवस्त्वितिविश्वासंनासावात्मन्युपाययौ ॥ ११ ॥ केवलंविररामास्यचेतोविगतचापलम् ॥
भोगेभ्योभूरिभंगेभ्योधाराभ्यइवचातकः ॥ १२ ॥ एकदासोऽमलप्रज्ञोमेरावेकांतसुस्थितम् ॥ पप्रच्छपितरंभक्त्याकृष्णद्वैपायनंमुनिम्
॥ १३ ॥ संसाराडंवरमिदंकथमभ्युत्थितंमुने ॥ कथंचप्रशमंयातिकियत्कस्यकदेतिवा ॥ १४ ॥ इतिपृष्टेनमुनिनाव्यासेनाखिलमात्म
जे ॥ यथावदमलंप्रोक्तंवक्तव्यंविदितात्मना ॥ १५ ॥ आज्ञासिपंपूर्वमेतदहमित्यथतत्पितुः ॥ सशुकःशुभयावुद्ध्यानवाक्यंवह्वमन्यत
॥ १६ ॥ व्यासोपिभगवान्वुध्वापुत्राभिप्रायमीदृशम् ॥ प्रत्युवाचपुनःपुत्रंनाहंजानामितत्त्वतः ॥ १७ ॥ जनकोनामभूपालोविद्यते
वसुधातले ॥ यथावद्वेत्त्यसौवेद्यंतस्मात्सर्वमवाप्स्यसि ॥ १८ ॥ पित्रेत्युक्तेशुकःप्रायात्सुमेरोर्वसुधातले ॥ विदेहनगरींप्रापजनकेनाभि
पालिताम् ॥ १९ ॥ आवेदितोसौयाष्टीकैर्जनकायमहात्मने ॥ द्वारिव्याससुतोराजन्शुकोत्रस्थितवानिति ॥ २० ॥ जिज्ञासार्थंशुक
स्यासावास्तामेवेत्यवज्ञया ॥ उक्त्वावभूवजनकस्तूष्णींसप्तदिनान्यथ ॥ २१ ॥ ततःप्रवेशयामासजनकःशुकमंगणम् ॥ तत्राहानिससप्तै
वतथैवावसदुन्मनाः ॥ २२ ॥ अथप्रवेशयामासजनकोंतःपुरंशुकम् ॥ राजानदृश्यतेतावदितिसप्तदिनानिच ॥ २३ ॥ तत्रोन्मदाभिःकां
ताभिर्भोजनैर्भोगसंचयैः ॥ जनकोलालयामासशुकंशशिसमाननम् ॥ २४ ॥

न्निपातएकाजनाङित्यत्रआङ्वर्ज्यइतिप्रसज्यप्रतिषेधपक्षस्वीकारात्प्रतिषेधाश्चवलीयांसोभवंतीतिमहाभाष्योक्तेःप्रगृह्यसंज्ञानिषेधात्संधिःसाधुरेव ॥ अथउपदेशानंतरंशुक
स्तत्पितुर्वाक्यंआज्ञासिपमित्यनपूर्वार्थतयाशुभयावुद्ध्यानवह्वमन्यतेत्यन्वयः ॥ १६ ॥ पुत्राभिप्रायंवुध्वातद्बुद्धिमेवानुसरन्प्रत्युवाचनाहंजानामि ॥ उक्तादन्यदितिभावः
॥ १७ ॥ १८ ॥ विदेहानामजनपदास्तेषांनगरींमिथिलाम् ॥ १९ ॥ याष्टीकैर्द्वास्थैर्यष्टिधरैः ॥ २० ॥ जनकोपिविदितशुकवृत्तांतःसहसैवोपदेशेव्यासवचनवदवहेलनयात
स्याकृतार्थतामाभूदितिशुकस्यवैराग्यादिसाधनानांविश्वासस्यस्थैर्यस्यचजिज्ञासार्थम् ॥ अवज्ञयाउपेक्षया ॥ २१ ॥ अंगणंगृहांतश्चत्वरम् ॥ उन्मनाःतत्त्वजिज्ञासोत्कंठावि
स्तृतानादरइतियावत् ॥ २२ ॥ यावद्भोजनादिभिस्त्वंनपूज्यसेतावद्राजानदृश्यतेइतिवादनमिषेणतत्रांतःपुरेसप्तदिनानिभोगसंचयैर्लालयामासेत्युत्तरेणसंवंधः ॥ २३ ॥ २४ ॥

भोगानादरयोःसुसमोऽतएवस्वस्थः ॥ तत्रहेतुर्मौनीनिगृहीतवागादींद्रियः ॥ २६ ॥ इत्थंपरीक्षणेनप
नाजकुर्नविचकुः ॥ बद्धपीठंदृढमूलम् ॥ २५ ॥ केवलमित्यवधारणे ॥ भोगानादरयोःसुसमोऽतएवस्वस्थः ॥ तत्रहेतुर्मौनीनिगृहीतवागादींद्रियः ॥ २६ ॥ निःशेषितानिनिरवशेषंकृतानिजगतिप्रसिद्धानिकार्याण्यवश्यकर्त्तव्यानिपरमपुरुषार्थ ॥ २७॥ इतिपृष्टेनजन
रिज्ञातस्तत्त्वदर्शनपर्यंतप्रतिष्ठितोविचारवैराग्यादिपरिपाकस्वभावोयस्यतम् ॥ २७॥ निःशेषितानिनिरवशेषंकृतानिजगतिप्रसिद्धानि ॥ २८ ॥ संसारेति ॥ प्राग्व्याख्यातम् ॥ २९ ॥ इतिपृष्टेनजन
साधनानियेनतथाविधहेकृतकृत्येत्यर्थः ॥ सर्वसुखलवानामात्मसुखेंतर्भावात्तत्प्राप्त्यैवप्राप्ताऽखिलमनोरथ ॥ २८ ॥ संसारेति ॥ प्राग्व्याख्यातम् ॥ २९ ॥ वाक्यार्थःसर्वोपनिषद्गतमहावाक्यानामर्थः ॥
केनतस्यशुकस्यपित्रापुरापूर्वंयत्प्रोक्तंतदेवकथितमित्यन्वयः ॥ ३० ॥ समुदाहृतंसम्यगुदाहरणोपपत्तिभिर्व्याख्यातम् ॥ ३१ ॥ वाक्यार्थःसर्वोपनिषद्गतमहावाक्यानामर्थः ॥
तत्तात्पर्यनिर्णायकन्यायप्रदर्शनपरेषुसूत्रभाष्यादिशास्त्रेषु ॥ ३२ ॥ स्वस्मिन्नज्ञानोपहितेआत्मनिविविधंकल्पयतीतिविकल्पोनंतकामकर्मवासनाबीजसंभृतंप्रलयसुषुप्त्योः

तेभोगास्तानिदुःखानिव्यासपुत्रस्यतन्मनः ॥ नाजह्रुर्मंदपवनाबद्धपीठमिवाचलम् ॥ २५ ॥ केवलंसुसमःस्वस्थोमौनीमुदितमानसः ॥
अतिष्ठत्सशुकस्तत्रसंपूर्णइवचंद्रमाः ॥ २६ ॥ परिज्ञातस्वभावंतंशुकंसजनकोनृपः ॥ आनीतंमुदितात्मानमवलोक्यननामह ॥ २७ ॥
निःशेषितजगत्कार्यप्राप्ताऽखिलमनोरथ ॥ किमीप्सितंतवेत्याशुकृतस्वागतमाहतम् ॥ २८ ॥ ॥ श्रीशुकउवाच ॥ ॥ संसाराडंबरमि
दंकथमभ्युत्थितंगुरो ॥ कथंप्रशममायातियथावत्कथयाशुमे ॥ २९ ॥ ॥ विश्वामित्रउवाच ॥ ॥ जनकेनेतिपृष्टेनशुकस्यकथितंत
दा ॥ तदेवयत्पुराप्रोक्तंतस्यपित्रामहात्मना ॥ ३० ॥ ॥ श्रीशुकउवाच ॥ ॥ स्वयमेवमयापूर्वमेतज्ज्ञातंविवेकतः ॥ एतदेवचपृष्टेनपित्रा
मेसमुदाहृतम् ॥ ३१ ॥ भवताप्येषएवार्थःकथितोवाग्विदांवर ॥ एषएवचवाक्यार्थःशास्त्रेषुपरिदृश्यते ॥ ३२ ॥ यथायंस्वविकल्पोत्थः
स्वविकल्पपरिक्षयात् ॥ क्षीयतेदग्धसंसारोनिःसारइतिनिश्चयः ॥ ३३ ॥

समष्टिव्यष्टिसंस्कारपरिशेषेणाव्याकृतेलीनमनादिजीवभावोपाधिभूतमंतःकरणंतस्मात्प्रलयक्रमविपरीतक्रमेणप्रथममपंचीकृतवियदाद्युत्पत्तिक्रमेणसमष्टिहिरण्यगर्भात्मना
ततःपंचीकरणेनविराडात्मनाततोन्नादिक्रमेणव्यष्टिस्थूलदेहात्मनातदंतर्व्यष्टिलिंगात्मनाचोत्थआविर्भूतोमहानर्थरूपोवर्त्तते ॥ सचकर्मोपासनसमुच्चयमात्रानुष्ठानेनाध्यात्मि
कव्यष्टिभावपरिच्छेदवासनामात्रक्षयेसमष्टिहिरण्यगर्भभावेनावतिष्ठते॥ श्रवणादिपरिपाकजन्यतत्त्वसाक्षात्कारेणसवासनकार्यकारणाविद्यानाशेतुमूलोच्छेदेनात्यंतमंतःकर
णपरिक्षयान्निःशेषंक्षीयते ॥ दग्धशब्दोनिंदायाम् ॥ अथवास्वप्रकाशात्मनिदुःस्थितत्वान्मिथ्यात्वाच्चपूर्वमेवदग्धप्रायोतएवनिःसारःसभूयःसाक्षात्कारप्रलयानलव्याप्तौकथं
तिष्ठेदितिभावः ॥ उपरिदग्धतृणवदंतःसारावशेषेणपुनःपुनःप्ररोहशंकावारणायवानिःसारइतिनिश्चयस्तत्त्वविदामितिशेषः ॥ ३३ ॥

जगत्नानाविषयानिदंज्ञातत्त्वंस्यादन्यद्वेत्यविश्वासेनभ्रमताचेतसाभ्रा
एतत्मयास्वयमेवपूर्वंविचारेणपरिज्ञातंयत्तदेवसत्यंकिंतर्हितदचलमसंदिग्धंस्टदियथाभवतितथाब्रूहि ॥ अतोऽस्मात्त्वयापरिज्ञातात् ॥ निश्चयोनिश्चेतव्योर्थः ॥ ३५ ॥ तमेवदृढनिश्चयायपुन
म्यमाणोहंत्वत्तस्त्वद्वचनविश्वासादितियावत् ॥ विश्रांतितत्रैवस्थैर्यमाप्नोमि ॥ ३४ ॥ ग्राक्भोगेभ्यः ॥ इहास्यांनिश्चयदशायाम् ॥ दृश्यात्दृश्यमात्रात् ॥३७॥ बालापिविषयत्यागशूरत्वान्महावीर॥३८॥
राह ॥ अविच्छिन्नेति ॥ ३६ ॥ महात्मनस्तवेतिशेषः ॥ प्राक्भोगेभ्यः ॥ इहास्यांनिश्चयदशायाम् ॥ दृश्यात्दृश्यमात्रात् ॥३७॥ बालापिविषयत्यागशूरत्वान्महावीर॥३८॥
यथातवपूर्णताजातातथातवपितुर्नेतिदार्ढ्यार्थंप्रशंसा ॥ एवमुत्तरत्रापि ॥३९॥४०॥ दृश्येवाह्मविषयेनपतसिदृश्यदर्शनस्यैवसंसारपातत्वात् ॥ उदरमंतरंकुरुतेअथतस्यभयंभव
तीतिश्रुतेः ॥ भ्रांतिज्ञेयांतरसद्भावभ्रमंदृश्यदर्शनभ्रमंवा ॥ ४१ ॥ सपूर्वोक्तोऽविच्छिन्नचिदात्मैकस्त्वमित्येवमनुशिष्टः ॥ सशुकः ॥ स्वच्छेदृश्यमालिन्यशून्ये ॥ ४२ ॥ सात्त्विक

तत्किमेतन्महाबाहोसत्यंब्रूहिममाचलम् ॥ त्वत्तोविश्रांतिमाप्नोमिचेतसाभ्रमताजगत् ॥ ३४ ॥ ॥जनकउवाच॥ ॥नातःपरतरःक
श्चिन्निश्चयोऽस्त्यपरोमुने॥ स्वयमेवत्वयाज्ञातंगुरुतश्चपुनःश्रुतम्॥३५॥अविच्छिन्नचिदात्मैकःपुमानस्तीहनेतरत्॥स्वसंकल्पवशाद्बद्धो
निःसंकल्पश्चमुच्यते॥ ३६ ॥ तेनत्वयास्फुटंज्ञातंज्ञेयंयस्यमहात्मनः॥ भोगेभ्योविरतिर्जाताहृश्यात्प्राक्सकलादिह ॥ ३७॥ तवबालम
हावीरमतिर्विरतिमागता॥ भोगेभ्योदीर्घरोगेभ्यःकिमन्यच्छ्रोतुमिच्छसि॥ ३८ ॥ नतथापूर्णताजातासर्वज्ञानमहानिधेः॥ तिष्ठतस्तप
सिस्फारेपितुस्तवयथातव॥ ३९॥ व्यासादधिकएवाहंव्यासशिष्योसितत्सुतः॥ भोगेच्छातानवेनेहमत्तोप्यत्यधिकोभवान्॥४०॥ प्रा
प्तंप्राप्तव्यमखिलंभवतापूर्णचेतसा॥ नदृश्येपतसिब्रह्मन्मुक्तस्त्वंभ्रांतिमुत्सृज॥४१॥ अनुशिष्टःसइत्येवंजनकेनमहात्मना॥ अतिष्ठत्स
शुकस्तूष्णींस्वच्छेपरमवस्तुनि॥ ४२ ॥ वीतशोकभयायासोनिरीहश्छिन्नसंशयः ॥ जगामशिखरंमेरोःसमाध्यर्थमनिंदितम्॥ ४३॥
तत्रवर्षसहस्राणिनिर्विकल्पसमाधिना॥ दशस्थित्वाशशामासावात्मन्यस्नेहदीपवत्॥४४॥ व्यपगतकलनाकलंकशुद्धःस्वयममलात्म
निपावनेपदेसौ॥ सलिलकणइवांबुधौमहात्माविगलितवासनमेकतांजगाम॥ ४५॥ इतिश्रीवासिष्ठमहारामायणवाल्मीकीयेदेवदू
तोक्तेमोक्षोपायेमुमुक्षुव्यवहारप्रकरणेशुकनिर्याणंनामप्रथमःसर्गः॥ १ ॥ देवाधिष्ठितत्वेनविक्षेपहेत्वभावादनिंदितंसमाध्यनुकूलमितियावत् ॥४३॥
शशामविदेहमुक्तोभूत् ॥ ४४ ॥ कलनादृश्योन्मुखताकलंकस्तन्मूलमज्ञानंतदुभयापगमाच्छुद्धः॥अतएवादृश्यसंचितागामिपुण्यपापाश्लेषविनाशाभ्याममलात्मनिप्रारब्धक
र्मक्षपणादशुद्धदेहादिनिवृत्तेःपावनेपदेपरमात्मवस्तुनि ॥ सलिलकणपक्षेकलनापृथग्भावः ॥ कलंकोनीलमेघसंबंधः ॥ एकतांभेदकोपाध्यपगमेवास्तवमखंडैक्यम्॥ तथाचो
क्तंविष्णुपुराणे॥ विभेदजनकेऽज्ञानेनाशमात्यंतिकंगते ॥ आत्मनोब्रह्मणोभेदमसंतंकःकरिष्यतीति॥४५॥ ॥ इतिवा०तात्पर्यप्रकाशेमुमुक्षुव्यवहारप्रकरणेप्रथमःसर्गः ॥ १ ॥

इहरामोपदेशार्थंविश्वामित्रेणधीमता ॥ प्रार्थितस्यवसिष्ठस्यतदुत्साहःप्रकीर्त्यते ॥ १ ॥ शुकाख्यायिकांप्रकृतेयोजयन्रामोपदेशायवसिष्ठंप्रवर्त्तयितुमारभमाणोविश्वामित्रउ
वाच ॥ तस्येत्यादिना ॥ यथायावत्प्रकारमुपयुक्तमुपपत्तियुक्तमुपदेशनमुपयुज्यतेतावदेवतेतवापिउपयुक्तंयुज्यतइतिसंबंधः ॥ उपयुक्तमभूदितिपूर्ववाक्यमात्रशेषतयातुनव्या
ख्येयं ॥ समानवाक्येयुष्मदस्मदादेशविधानेनविरोधात् ॥ १ ॥ उक्तमर्थंसर्वमुनिसंमत्यासमर्थयितुंमुनीश्वराइतितेषांसंबोधनम् ॥ स्वदंतेरोचंते ॥ अस्मैरामाय॥ रुच्यर्थानांप्री
यमाणइतिसंप्रदानत्वाच्चतुर्थी ॥ २ ॥ ३ ॥ भावनयावासनया ॥ तानवमल्पताम् ॥ ४ ॥ यावद्विषयवासनाक्षीयतेतावतामुच्यते ॥ सर्वथाक्षयेतुसर्वतोमुक्तिरितिभावः ॥ ५ ॥

श्रीविश्वामित्रउवाच॥ ॥तस्यव्याससतनूजस्यमलमात्रोपमार्जनम्॥यथोपयुक्तंतेरामतावदेवोपयुज्यते॥१॥ज्ञेयमेतेनविज्ञातमशे
षेणमुनीश्वराः॥स्वदंतेस्मैनयद्भोगारोगाइवसुमेधसे॥२॥ज्ञातज्ञेयस्यमनसोनूनमेतद्धिलक्षणम्॥नस्वदंतेसमग्राणिभोगवृंदानियत्सु
नः॥३॥भोगभावनयायातिबंधोदार्ढ्यमवस्तुजः॥तयोपशांतयायातिबंधोजगतितानवम्॥४॥वासनातानवंराममोक्षइत्युच्यतेबु
धैः॥पदार्थवासनादार्ढ्यंबंधइत्यभिधीयते॥५॥स्वात्मतत्त्वाभिगमनंभवतिप्रायशोनृणाम्॥मुनेर्विषयवैरस्यंकदर्थाद्धुपजायते॥६॥
सम्यक्पश्यतियस्तज्ज्ञोज्ञातज्ञेयःसपंडितः॥नस्वदंतेबलादेवतस्मैभोगामहात्मने॥७॥यशःप्रभृतिनायस्मैहेतुनैवविनापुनः॥भुवि
भोगानरोचंतेसजीवन्मुक्तउच्यते॥८॥ज्ञेयंयावन्नविज्ञातंतावत्तावन्नजायते॥विषयेष्वरतिर्जंतोर्मरुभूमौलतायथा॥९॥अतएवहि
विज्ञातज्ञेयंविद्धिरघूद्वहम्॥यदेनंरंजयंत्येतानरम्याभोगभूमयः॥१०॥

अभिगमनमापातज्ञानम् ॥ प्रायशःअल्पश्रवणाद्यायासेनापि ॥अपरोक्षदृक्स्वरूपस्यदृश्यविवेकमात्रेणैवसुपरिचयत्वादितिभावः ॥ कदर्थात्क्लेशात् ॥ ६ ॥ नर्थलंतावताकिंन
राग्येणतत्राह ॥ सम्यगिति ॥ सम्यक्रागाद्यप्रतिहतंयथास्यात्तथायःपश्यतिसएवतज्ज्ञस्तत्त्वज्ञानजन्याविद्योच्छेदफलभागितिज्ञातज्ञेयःपंडितश्च ॥ आपातदर्शीतुमौर्ख्यानपग
मान्नतथेतिभावः ॥ ७ ॥ प्रभृतिग्रहणेनपूजालाभादयोगृह्यंते ॥ हेतुनाउद्देश्येनफलेनविनैव ॥ तथाचनदांभिकभोगत्यागादिदृष्टसिद्धिरित्यर्थः ॥ ८ ॥ वैराग्यबोधोपरमाणां
सिद्धौपरस्परसहायत्वाज्ज्ञानपरिपाकातिशयेनैवमूलोच्छेदादात्यंतिकरागक्षयइत्याह ॥ ज्ञेयमिति ॥ यावद्यावन्नविज्ञातंतावत्तावद्विषयेष्वरतिर्नजायतइतिव्यतिरेकप्रकर्षान्
न्वयप्रकर्षोलक्ष्यते ॥ रसोप्यस्यपरंदृष्ट्वानिवर्त्ततइतिभगवद्वचनादितिभावः ॥ ९ ॥ भोगभूमयोविषयाः ॥ १० ॥

यदिगमस्तत्त्वज्ञस्तर्हिकिमर्थमुपदेशार्थंवक्ष्यमाणावसिष्ठप्रार्थनातत्राह ॥ रामइति ॥ सतोवसिष्ठस्यमुखात् ॥ आप्नोत्येवान्योप्यधिकारीतिशेषः॥ तथाचसर्वोपकारायोपदेशप्रार्थनेत्यर्थः॥ अथवारामोयदंतस्तत्त्वंजानातितद्रामएवविश्वासदार्ढ्याभावादनाप्नप्रायंवसिष्ठमुखादाकर्ण्यविश्वस्तस्तत्रचित्तविश्रांतिमाप्नोत्येवेत्यर्थः ॥ ११ ॥ तदेवस्फुटमाह ॥ केवलमिति ॥ केवलीभावविश्रांतिंद्वैतनिरासेअद्वितीयचिन्मात्रपरिशेषम ॥ शरल्लक्ष्मीपक्षेविश्रमणंनिर्मेघनिर्मलाकाशमात्रपरिशेषम् ॥ खल्विति निश्चयेनविश्वासेनेत्यर्थः ॥ १२ ॥ १३ ॥ ननुत्वयैवकुतोनोपदिश्यतेतत्राह ॥ रघूणामिति ॥ रघूपलक्षितानामिक्ष्वाकूणांनराघवाणामेवप्रभुर्नियंता ॥ तदतिक्रमेत्रिशंकुप्रभृतीनांदंडदर्शनादिति

रामोयदंतर्जानातितद्वस्त्वित्येवसन्मुखात्॥ आकर्ण्यचित्तविश्रांतिमाप्नोत्येवमुनीश्वराः॥ ११ ॥ केवलंकेवलीभावविश्रांतिंसमपेक्षते ॥ रामबुद्धिःशरल्लक्ष्मीःखलुविश्रमणंयथा ॥ १२ ॥ अत्रास्यचित्तविश्रांत्यैराघवस्यमहात्मनः॥ युक्तिंकथयतुश्रीमान्वसिष्ठोभगवानयम्॥ १३॥ रघूणामेषसर्वेषांप्रभुःकुलगुरुःसदा ॥ सर्वज्ञःसर्वसाक्षीचत्रिकालामलदर्शनः॥ १४॥ वसिष्ठभगवन्पूर्वंकच्चित्स्मरसियस्त्वयम्॥ आवयोर्वैरशांत्यर्थंश्रेयसेचमहाधियाम् ॥ १५॥ निषधाद्रेर्मुनीनांचसानौसरलसंकुले॥ उपदिष्टंभगवताज्ञानंपद्मभुवाबहु ॥१६॥ येनयुक्तिमताब्रह्मन्ज्ञानेनेयंहिवासना॥ सांसारीनूनमायातिशमंश्यामेवभास्वता॥१७॥ तदेवयुक्तिमज्ज्ञेयंरामायांतेनिवासिने॥ ब्रह्मन्नुपदिशाशुत्वंयेनविश्रांतिमेष्यति॥ १८॥ कदर्थनाचनैवैषारामोहिगतकल्मषः॥ निर्मलेमुकुरेवक्रमंयत्नेनैवबिंबति ॥ १९॥ तज्ज्ञानंसचशास्त्रार्थस्तद्वैदग्ध्यमनिंदितम्॥ सच्छिष्यायविरक्तायसाधोयदुपदिश्यते॥ २०॥ अशिष्यायाविरक्तायत्किंचिदुपदिश्यते॥ तत्प्रयात्यपवित्रत्वंगोक्षीरंश्वदृताविव ॥ २१॥ वीतरागभयक्रोधानिर्मानागलितैनसः॥ वदंतित्वादृशायत्रतत्रविश्राम्यतीहधीः॥ २२॥

भावः ॥ सर्वज्ञःशास्त्रतः ॥ सर्वस्यसाक्षीतत्त्वतोयोगबलेनविभागशश्चसाक्षाद्द्रष्टा ॥ साक्षाद्द्रष्टरिसंज्ञायामितीनिः ॥ तत्रहेतुस्त्रिष्वपिकालेष्वमलंमोहातिरस्कृतंदर्शनसाधनंमनोयस्य ॥१४॥कच्चिदितिहितप्रश्ने ॥ महाधियांमुनीनामित्युत्तरेणान्वयः ॥ १५॥ सानौप्रस्थदेशे ॥ सरलावृक्षविशेषाः ॥ बहुश्रेष्ठमुपपत्तितोवाबहु ॥१६॥ येनज्ञानेन ॥ युक्तिरुपपत्तिस्तदेकतानताच ॥ १७ ॥ १८ ॥ अल्पफलोबहुप्रयासःकदर्थना॥१९॥ नेयंकदर्थनाप्रत्युताभिज्ञतादयादिसार्थक्यापादनादभ्युदयएवेत्याह ॥ तदिति ॥ विदग्धःपंडितस्तद्भावोवैदग्ध्यम् ॥ अनिंदितंप्रशस्तम ॥ पात्रेष्वप्रतिपत्तौवैय्यर्थ्यान्निंदितमेवस्यादितिभावः ॥ २० ॥ दृतिश्चर्मभस्त्रा ॥ २१ ॥रागादीनामविद्यामूलकत्वात्तदुच्छेदादेववीतरागादयः॥ गलितैनसोनिष्पापाः ॥ इहास्यामुपदेशदशायामेवअस्मिन्नित्यपरोक्षेआत्मतत्त्वेवा ॥ २२ ॥

गाधिपुत्रेणविश्वामित्रेण ॥ अपूजयन्प्राशंसन् ॥ २३ ॥ यतोयंब्रह्मणःपुत्रोब्रह्मेवमहातेजस्त्वादिगुणविशिष्टोऽतोदिव्यानामपिब्रह्मर्षीणांपुरतोब्रह्मेवोवाचेतिभावः ॥ २४ ॥ तत्त्वज्ञानांलक्षणभूतानमानित्वादिगुणान्स्वाचरितैःशिक्षयन्निवविनयोक्तिभिःप्रार्थितार्थनिरूपणंप्रतिजानीते ॥ मुनेइत्यादिना ॥ आदिशसिआज्ञापयसि ॥ २५ ॥ ज्ञानोदये अज्ञाननिवृत्तोनविलंबइतिद्योतनायाश्विति ॥ २६ ॥ यज्ज्ञानंपुरापद्मजन्मनाप्रोक्तंतत्सर्वमखंडितमविच्छिन्नंग्रंथतोर्थतश्चस्मरामि ॥ अथवाअखंडितमपरिच्छिन्नमतएवसर्वं पूर्णंयज्ज्ञानस्वरूपमात्मतत्त्वंतदखंडितंनिरंतरंस्मरामिअनुसंदधे ॥२७॥ असौमहात्मावसिष्ठइतिनिगदितवान्व्यक्तंप्रतिज्ञातवान्सन्यथाशूरोनटोवाभूषणाच्छादनायुधादिपरि

इत्युक्तेगाधिपुत्रेणव्यासनारदपूर्वकाः ॥ मुनयस्तेतमेवार्थंसाधुसाध्वित्यपूजयन् ॥ २३ ॥ अथोवाचमहातेजाराज्ञःपार्श्वेव्यवस्थितः ॥ ब्रह्मेवब्रह्मणःपुत्रोवसिष्ठोभगवान्मुनिः ॥ २४ ॥ वसिष्ठउवाच ॥ ॥ मुनेयदादिशसिमेतदविघ्नंकरोम्यहम् ॥ कःसमर्थःसमर्थोपिसतां लंघयितुंवचः ॥ २५ ॥ अहंहिराजपुत्राणांरामादीनांमनस्तमः ॥ ज्ञानेनापनयाम्याशुदीपेनेवनिशातमः ॥ २६ ॥ स्मराम्यखंडितंसर्वंसंसारभ्रमशांतये ॥ निषधाद्रौपुराप्रोक्तंयज्ज्ञानंपद्मजन्मना ॥ २७ ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ इतिनिगदितवानसौमहात्मापरिकरबंधगृहीतवक्तृतेजाः ॥ अकथयदिदमज्ञतोपशांत्यैपरमपदैकविबोधनंवसिष्ठः ॥ २८ ॥ ॥ इतिश्रीवासिष्ठम० वा० दे० मो० मुमुक्षु० विश्वामित्रवाक्यंनामद्वितीयःसर्गः ॥ २ ॥ ॥ ७ ॥ श्रीवसिष्ठउवाच ॥ ॥ पूर्वमुक्तंभगवतायज्ज्ञानंपद्मजन्मना ॥ सर्गादौलोकशांत्यर्थंतदिदंकथयाम्यहम् ॥ १ ॥

करबंधनेनोद्युक्तःशोभतेतथैवशिष्यप्रबोधानुरंजनोपायदृष्टांतोपाख्यानप्रमाणतर्कार्थानुसंधानोत्साहादिपरिकरबंधनेनगृहीतंस्वीकृतंवक्तॄणांव्याख्यातॄणांतेजःशोभाविशेषो येनतथाविधःसन्सर्वेषांजगतामज्ञतायाउपशांत्यैमूलोच्छेदायेदंवक्ष्यमाणंपरमपदस्यैकंमुख्यंविबोध्यतेयेनतद्विबोधनंशास्त्रमकथयत् ॥ २८ ॥ ॥ इतिश्रीमद्वासिष्ठमहारा० तात्पर्यप्रकाशेमुमुक्षुव्यवहारप्रकरणेद्वितीयःसर्गः ॥ २ ॥ ॥ ७ ॥ ॥ स्थूलादिजगदारोपनिरासाभ्यांप्रसाध्यते ॥ प्रत्यक्चिदात्माविषयोरामशंकाकृतिच्छलात् ॥१॥ इत्थंप्राक्तनंसर्वंप्रतिसंधायविस्तरेणतद्वक्तुकामःसद्गुरुस्मरणरूपंमंगलमाचरन्विद्यासंप्रदायशुद्धिंचदर्शयन्शिष्यावधानायपुनःप्रतिजानीते ॥ पूर्वमिति ॥ लोकानां शांतिःसर्वसंसारदुःखोपशांतिस्तदर्थंयज्ज्ञानंज्ञानसाधनंशास्त्रमुक्तंतदेवेदंकथयामिनान्यदितिसंप्रदायशुद्धिरुक्ता ॥ १ ॥

इत्थंप्रतिज्ञयाअवधापितोरामःसत्यामन्यजिज्ञासायांतदवधानायोगात्सूचीकटाहन्यायेनप्रथममुत्पन्नःसंशयस्तदपनोदंप्रार्थयमानउवाच ॥ कथयिष्यसीति ॥ एतत्संशय निवृत्त्यनंतरमितिभावः ॥ इमंव्यासस्यशिष्टलोकवत्जीवनदर्शनाच्छुकस्यचविदेहमुक्तिश्रवणात्संजातम् ॥ २ ॥ तमेवदर्शयति ॥ पितेति ॥ नन्वघटितोयंसंशयः ॥ न ॥ आ त्यंतिकदुःखोच्छेदोपलक्षितनिरतिशयानंदस्वप्रकाशात्ममात्रपरिशेषरूपत्वाद्विदेहमुक्तिरेवज्ञानफलंतच्चेत्सर्वज्ञस्यापिव्यासस्यनसंपन्नंज्ञानस्यानित्यफलत्वंप्राप्तम् ॥ किंचयदि ज्ञानेनाज्ञानंनिःशेषमुच्छिन्नंतर्हिशृग्वादिवत्जीवनासंभवउपादाननाशेकार्यावस्थानायोगात् ॥अजीवनेचब्रह्मविद्याप्रवर्त्तकाभावात्संप्रदायोच्छेदः॥अथनोच्छिन्नंतर्हिनिर्मो क्षःसिद्धएव॥ नहिकर्मैवज्ञानमदृष्टद्वारामरणोत्तरंफलतितस्यकालत्रयेप्यखंडात्मनावस्थितस्येत्यविधेयत्वादितिनजीवन्मुक्तिसिद्धिरितिभावः॥३॥ इतिपृष्टोभगवान्वसिष्ठोया वद्रामोबंधस्याविद्यकत्वमविद्यास्वरूपंतत्साक्ष्यपरिच्छिन्नसर्वाधारचित्स्वरूपंचनजानातितावज्जीवन्मुक्तौनविश्वसितीतिप्रथमंतद्युत्पाद्यपश्चात्समाधास्यामीतिमन्यमानस्तद

श्रीरामउवाच॥ ॥कथयिष्यसिविस्तीर्णांभगवन्मोक्षसंहिताम्॥ ॥इमंतावत्क्षणंजातंसंशयंमेनिवारय॥२॥ पिताशुकस्यसर्वज्ञो गुरुर्व्यासोमहामतिः॥ विदेहमुक्तोनकथंकथंमुक्तःसुतोस्यसः॥ ३॥ ॥श्रीवसिष्ठउवाच॥ ॥परमार्कप्रकाशांतस्त्रिजगत्त्रसरेणवः॥ उत्पत्योत्पत्यलीनायेनसंख्यामुपयांतिते ॥४॥ वर्त्तमानाश्चंयाःसंतित्रैलोक्यगणकोटयः॥ शक्यंतेताश्चसंख्यातुंनैवकाश्चनकेनचित् ॥५॥ भविष्यंतिपरांभोधौजगत्सर्गतरंगकाः॥ तांश्चवैपरिसंख्यातुंसाकथैवनविद्यते॥६॥ ॥श्रीरामउवाच॥ ॥याभूतायाभविष्यं त्योजगत्सर्गपरंपराः॥ तासांविचारणायुक्तावर्त्तमानास्तुकाइव॥७॥

थैसुखबोधत्वात्साक्षिणिस्थूलप्रपंचपरंपराध्यारोपंदर्शयति ॥ परमार्केत्यादिश्लोकत्रयेण ॥ नतत्रसूर्योभातिनचंद्रतारकं येनसूर्यस्तपतितेजसेद्धइत्यादिश्रुतेःसूर्यादिसर्वजगद वभासकत्वात्परमार्कःपरमात्मासएवचिद्यकाशस्तदंतःपूर्वेयेत्रिजगदुपलक्षितानंतकोटिब्रह्मांडलक्षणास्त्रसरेणवउत्पत्योत्पत्यस्थित्वास्थित्वालीनास्तेसंख्यांनोपयांतिसंख्यातुंन शक्यंतइत्यर्थः॥एतेनव्यासादयोप्यसंख्याताउत्पद्यंतइतिसूचितम् ॥४॥ वर्त्तमानाःसंतीति ॥ आरब्धापरिसमाप्तत्वंवर्त्तमानता॥ उक्तिकालसंबंधोस्तितेतिनपौनरुक्त्यम्॥५॥प रःपरमात्मासएवांभोधिः ॥ येभविष्यंतितान् ॥ साप्रसिद्धा ॥ कथावाक्प्रवृत्तिः॥ अनेनत्रैकालिकजगदुत्पत्त्याद्याधारभूतेपरमात्मनिजगदध्यारोपोदर्शितः॥ ६ ॥ पृष्टमर्थमुपे क्ष्यान्यद्वदतोगुरोर्निगूढाशयःस्वेनसम्यग्विदितइतिगुरोरुत्साहायस्वकौशलंसूचयन्रामस्तेषुसर्गेषुत्त्ययंकंचिद्विशेषमुवाच ॥ याइति ॥ यद्यपिवर्त्तमानाःसर्गाःप्रातिस्विकरूपेणा संख्येयास्तथापितेकालतःकूलद्वयदर्शनाद्भूतभविष्यत्सर्गापेक्षयान्यूनसंख्याइतिविदिताएवेतिभावः ॥ काइवकिंभूताइवोतभविष्यंतइव॥नोभयसाम्यमपीतिनतत्संख्यावेषांवि चारणायुक्तेत्यर्थः ॥ तथाचानंतानामागंतूनांतेषामुपादानमात्मतत्त्वमनंतमेकमनागंतुकंचिद्रूपंत्वयादर्शितमितिमयाविदितमितिभावः ॥ ७ ॥

एवंनिगूढाशयपरिज्ञानेनतत्रविशेषोक्त्याश्रोत्साहितःपूर्वोक्तस्थूलप्रपंचस्यमिथ्यात्वबोधनायसूक्ष्मभूतानामेवपंचीकरणेनस्थूलीभावावभासात्सूक्ष्मप्रपंचमात्रंतेतिदर्शयिष्यन् श्रीवसिष्ठउवाच ॥ तिर्यगिति ॥ तिर्य्यञ्चःपशुपक्ष्यादयःपुरुषामनुष्यादेवाःप्रसिद्धाआदिःप्रधानोयस्यप्राणिनिकायस्यतस्यमध्येयोयस्मिन्नेवप्रदेशेयदैवविनश्यतिम्रियतेसो सौप्रत्यगात्मातस्मिन्नेवप्रदेशेतदैवेदंवक्ष्यमाणंजगत्रयंप्रपश्यतिनान्यत्रनवाचिरेणेत्यर्थः ॥ ८ ॥ सकिमुपकरणःकिंस्वरूपश्चपश्यतितत्राह ॥ आतिवाहिकेति ॥ अतिवहनमति वाहोधूमार्चिरादिमार्गाभिमानिदेवैःपरलोकप्रापणंतत्रसाधुरातिवाहिकस्तन्नाम्नाचित्तशरीरेणचित्ताहंकारमनोबुद्धिदशेंद्रियप्राणघटितेनवासनामयेनसूक्ष्मशरीरेणस्वहृद्येवा तव्योम्निदहराकाशेजगत्रयंवासनामयमेवानुभवतिभ्रांत्या वासनामयतत्तच्छरीराणिवाप्राप्नोतिक्रमशः ॥ वस्तुतस्तुसव्योमात्माप्रागुक्तचिदाकाशस्वरूपःअतएवाजोजन्मादि विक्रियारहितश्चेत्यर्थः ॥ ननुतेनप्रद्योतेनैषआत्मानिष्क्रामतिचक्षुषोवामूर्ध्नोवाअन्येभ्योवाशरीरदेशेभ्यस्तमुत्क्रामंतंप्राणोनूत्क्रामति उत्क्रामंतंस्थितंवापीत्याद्यनेकश्रुतिस्मृति

**श्रीवसिष्ठउवाच॥ ॥ तिर्यक्पुरुषदेवादेर्योनामसविनश्यति॥ यस्मिन्नेवप्रदेशेसौतदैवेदंप्रपश्यति॥ ८ ॥ आतिवाहिकनाम्नांतःस्वहृ द्येवजगत्रयम्॥ व्योम्निचित्तशरीरेणव्योमात्मानुभवत्यजः॥ ९ ॥ एवंमृताम्रियंतेचमरिष्यंतिचकोटयः॥ भूतानांयांजगंत्याशामुदिता निपृथक्पृथक्॥ १० ॥ संकल्पनिर्माणमिवमनोराज्यविलासवत्॥ इंद्रजालामालइवकथार्थप्रतिभासवत्॥ ११ ॥**

प्रसिद्धिविरुद्धंमृतस्यस्वहृद्येवपरलोकदर्शनंकथमुच्यतइतिचेत् सत्यम् ॥ कर्मोपासनानुरूपव्यवहारदृष्ट्यातेश्रुतिस्मृतिवादाः ॥ इहतुपरमार्थदृष्ट्याअस्मिन्द्यावापृथिवीअंतरे वसैमाहितेइतिश्रुतिवादवद्धृद्येवपरलोककल्पनमुच्यते ॥ आत्मनोवैपुल्याद्धृदयस्याप्यपरिच्छिन्नत्वात्साक्षिणोहृदयपरिच्छेदंनिवार्यनिष्क्रियत्वंप्रपंचस्यवासनामात्रमयत्वंच व्युत्पादयितुंपरलोकवदुत्क्रमणगमनादेरपितत्रैवकल्पनामात्रेणाप्युपपत्तेरित्यभिप्रेत्येत्यविरोधः ॥ ९ ॥ एकत्रव्युत्पादितंन्यायंसर्वत्रदर्शयति ॥ एवमिति ॥ भूतानांकोटयइत्य न्वयः ॥ जगंतिदृश्यजातानिमरणकालेतेषांजगतांवासनासुलीनानियानियांआशांवासनांयस्यांयस्यांवासनायांकर्मपरिपाकानुरोधात्पृथक्पृथग्देवमनुष्यपश्वादियोनिभेदेन उदितानिउद्भाव्यस्फुरंतितानितान्येवप्राप्नुवंतीतिशेषः ॥ यद्भद्भवंतितदाभवंति यंयंवापिस्मरन्भावमित्यादिश्रुतिस्मृतिभ्यइतिभावः ॥ १० ॥इत्थंवासनामयत्वेजगतोयत्फलितं परमार्थदृष्ट्याभ्रमरूपत्वंतदाह ॥ संकल्पेत्यादिषड्भिः ॥ संकल्पेमानसपूजादौरत्नमयप्रासादादेर्यत्नेननिर्माणंमनोराज्येत्वयत्नेनेतिभेदः ॥ निर्वाणमितिपाठेनिर्वृतिर्निर्वाणंसुखंसा कल्पिकांगनापरिष्वंगादिजम् ॥ इंद्रजालान्यारचितामालेवयस्मिन्भ्रमेसइव ॥ ११ ॥

१ कल्पिते.

दुर्वांतोवातरोगविशेषस्तेनभूकंपभ्रमः ॥ वालस्यभीषणार्थंकल्पित.पिशाचस्तद्वत् ॥ मुक्तालीमौक्तिकसमूहः ॥ नौकारूढानांनौस्पंदेतीरस्थतरूणांयानंगमनंभ्रांत्याप्रसिद्धम् ॥ ॥ १२ ॥ संविन्तिर्दर्शनम् ॥ स्मृतेःस्मरणाज्जातंकल्पितखपुष्पंतद्वत् ॥ जगत्संसरणमितिप्रथमांतं प्रथमांतश्राक्तनदृष्टांतान्वयानुरोधात् ॥ अनुभवतीत्यत्रतुद्वितीयांततयाविपरिणामेनसंवध्यते ॥ मृतइतिजातस्याप्युपलक्षणं ॥ १३ ॥ तर्हिकथंवैधर्म्याच्चनस्वमादिवदितिभगवतोवादरायणस्यसूत्रं भोक्तुश्चिरंतत्रवैधर्म्येणनियतव्यवहारादिःसत्यताग्रस्यपश्चतत्राह ॥ तत्रेति ॥ अतिपरिणामश्चिरपरिचयः ॥ घनतांपंचीकरणेनदृढताम् ॥ तथाचतत्कृतएववैधर्म्यादिव्यवहारइतिभावः ॥ १४ ॥ अनवस्थितस्वभावत्वादपिजगतोमिथ्यात्वमितिदर्शयितुमाह ॥ पुनरिति ॥ ईहाजन्मोत्तरमरणपर्यंतचेष्टा ॥१५॥ वासनायाअंतःअंतरेअन्येपुरुषादेहाः ॥ पुरुषाइतिपश्वादीनामप्युपलक्षणम् ॥ कदलीदलस्य

दुर्वांतभूकंपइवत्रस्तवालपिशाचवत् ॥ मुक्तालीवामलेव्योम्निनौस्पंदतरुयानवत् ॥ १२ ॥ स्वप्नसंवित्तिपुरवत्स्मृतिजातखपुष्पवत् ॥ जगत्संसरणंस्वांतर्मृतोनुभवतिस्वयम् ॥ १३ ॥ तत्रातिपरिणामेनतदेवघनतांगतम् ॥ इहलोकोयमित्येवजीवाकाशेविजृंभते ॥ १४ ॥ पुनस्तत्रैवजन्मेहामरणाद्यनुभूतिमान् ॥ परंलोकंकल्पयतिमृतस्तत्रतथापुनः ॥ १५ ॥ तदंतरन्येपुरुषास्तेषामंतस्तथेतरे ॥ संसारइतिभांतीमेकदलीदलपीठवत् ॥ १६ ॥ नपृथ्व्यादिमहाभूतगणानचजगत्क्रमाः ॥ मृतानांसंतितत्रापितथाप्येषांजगद्भ्रमाः ॥ १७ ॥ अविद्यैवस्वनंतेयंनानाप्रसरशालिनी ॥ जडानांसरिदादीर्घातरत्सर्गतरंगिणी ॥ १८ ॥ परमार्थांबुधौस्फारेरामसर्गतरंगकाः ॥ भूयोभूयोनुवर्त्तंते तएवान्येचभूरिशः ॥ १९ ॥ सर्वतःसदृशाःकेचित्कुलकर्ममनोगुणैः ॥ केचिदर्द्धेनसदृशाःकेचिच्चातिविलक्षणाः ॥ २० ॥ इमंव्यासमुनितत्रद्वात्रिंशंसंस्मराम्यहम् ॥ यथासंभवविज्ञानदृशासंदृश्यमानया ॥ २१ ॥

पीठान्याधारभूताःकदलीत्वचस्तद्वत् ॥ १६ ॥ एवंमिथ्यात्वेसिद्धेतदपवादेनात्मपरिशेषसिद्धिरित्यभिप्रेत्याह ॥ पृथ्व्यादीति ॥ ज्ञानंविनानोच्छिद्यंतेइतिशेषः ॥ एवंप्रपंचापवादेनपरिशिष्टात्मसिद्धिः ॥ १७ ॥ मूलोच्छेदंविनानापलापमात्रेणतन्निवृत्तिसिद्धिरित्यभिप्रेत्यविद्योच्छेद्यत्वप्रसिद्धयेसूक्ष्मभावेनव्युत्पादितप्रपंचस्यकारणाविद्यामात्रत्वमाह ॥ अविद्यैवेति ॥ जडानांमूढानांआदीर्घादुस्तरेतियावत् ॥ तरद्भिश्चलद्भिःसर्गैस्तरंगिणीतरंगवती ॥ १८ ॥ अविद्यादिसर्वकल्पनाधिष्ठानंदर्शयति ॥ परमार्थेति ॥ तेप्राक्तनाअभिनवाश्च ॥ १९ ॥ २० ॥ प्रकृतशंकासमाधानोपोद्घातेनजगद्व्यवस्थितिप्रकृतशास्त्रविषयचव्युत्पाद्यशंकासमाधानमुपक्रमते ॥ इममित्यादिना ॥ पुराणभारतादिनिर्माणकार्यैः संदृश्यमानयाप्रसिद्धया यथोचितेनसंभवेनजन्मनाधिष्ठानेनशास्त्रादिज्ञानेनदृशाब्रह्मविषययाचोपलक्षितेषु तथनेपुव्याससर्गतरगकेषु इमद्वात्रिंशमस्मरामीतिसंबंधः ॥ २१ ॥

तेष्वप्यवांतरविशेषमाह ॥ द्वादशेति ॥ अल्पधियोब्रह्मविद्ब्रह्मविद्वरोब्रह्मविद्वरीयान्ब्रह्मविद्वरिष्ठइतिप्रसिद्धेषुचतुर्थस्थानाविश्रांतेरल्पबुद्धयः ॥ इ...
॥ २२ ॥ तथैवपूर्वसदृशाअन्यथैवतद्विलक्षणाश्चेत्यर्थः ॥ २३ ॥ २४ ॥ ब्राह्मीब्राह्मकल्पावयवभूताचेतासांप्रतमस्तिप्रतिकल्पंचासीद्भविष्यतिच ॥ सपूर्वसदृशोऽन्यस्तद्विल
क्षणः ॥ त्वंरामोऽहंवसिष्ठः ॥ २५ ॥ अस्यपुरोवर्त्तिनोव्यासस्यव्यासजीवस्य ॥ २६ ॥ २७ ॥ इतरेविसदृशाः ॥ विदःअभिज्ञाः ॥ २८ ॥ करिष्यतिअयमितिशेषः ॥ २९ ॥
कुलस्यस्ववंशस्यभरतवंशस्यवाप्रथांप्रख्यातिम् ॥ ब्रह्मत्वंहैरण्यगर्भाधिकारम् ॥ वैदेहमोक्षणंविदेहमुक्ततांप्राप्स्यतीतिशेषः ॥ भाव्यमितिभावेकृत्यः ॥ अथवावैदेहमोक्षणंभाव्यं

द्वादशाल्पधियस्तत्रकुलाकारेहितैःसमाः ॥ दशसर्वेसमाकाराःशिष्टाःकुलविलक्षणाः॥ २२ ॥ अद्याप्यन्येभविष्यंतिव्यासवाल्मीकय
स्तथा॥ भृग्वंगिरःपुलस्त्याश्चतथैवाप्यन्यथैवच॥ २३ ॥ नराःसुरर्षिदेवानांगणाःसंभूयभूरिशः ॥ उत्पद्यंतेविलीयंतेकदाचिच्चपृथक्पृ
थक्॥ २४॥ब्राह्मीद्वासमतिस्त्रेताआसीदस्तिभविष्यति॥ सएवान्यश्चलोकाश्चत्वंचाहंचेतिवेद्म्यहम्॥ २५॥ क्रमेणास्यमुनेरित्थंव्यास
स्याद्भुतकर्मणः॥ संलक्ष्यतेवतारोयंदशमोदीर्घदर्शिनः ॥ २६ ॥ अभूमव्यासवाल्मीकियुक्तावयमनेकशः॥ अभूमवयमेवेमेबहुश
श्चपृथक्पृथक्॥ २७॥ अभूमवयमेवेमेसदृशाइतरेविदः ॥ अभूमवयमेवेमेनानाकाराःसमाशयाः ॥ २८॥ भाव्यमद्याप्यनेनेहनवु
वाराष्टकंपुनः॥ भूयोपिभारतंनामसेतिहासंकरिष्यति॥ २९॥ कृत्वावेदविभागंचनीत्वानेनकुलप्रथाम् ॥ ब्रह्मत्वंचतथाकृत्वाभाव्यंवै
देहमोक्षणम्॥ ३० ॥ वीतशोकभयःशांतनिर्वाणोगतकल्पनः॥ जीवन्मुक्तोजितमनाव्यासोयमितिवर्णितः ॥ ३१ ॥ वित्तवंधुवयःक
र्मविद्याविज्ञानचेष्टितैः॥ समानिसंतिभूतानिकदाचिन्नतुतानितु॥ ३२ ॥कंचित्सर्गशतैस्तानिभवंतिनभवंतिवा॥कदाचिदपिमायेयमि
त्यमंतविवर्जिता॥ ३३॥ यच्छतीयंविपर्यासंभूरिभूतपरंपरा॥ बीजराशिरिवाजस्रंपूर्यमाणःपुनःपुनः॥ ३४ ॥

प्राप्तव्यम् ॥ भूप्राप्तावात्मनेपदीतस्मात्कर्मणिकृत्यः ॥ ३० ॥ तस्यसांप्रतंजीवन्मुक्ततांदर्शयति ॥ वीतेति ॥ निर्वाणोनिर्गतोमोहबंधात् ॥ गत्यर्थत्वात्कर्त्तरिक्तः ॥ निर्वाणोवा
तेइतिनिष्ठानत्वम् ॥ शांतश्चासौनिर्वाणश्चेतिकर्मधारयः ॥ अतएवगताअहंममेत्यध्यासकल्पनायस्य ॥ अतएवचवीतशोकभयः ॥ ३१ ॥ कचित्तुतानिनसमानीत्यन्वयः
॥ ३२ ॥ कचित्कदाचिदपिभवंति ॥ ३३ ॥ भूतपरंपराप्राणिनिकायः॥ यथाधान्यादिबीजराशिर्मानायपुनःपुनःप्रस्थादौपूर्यमाणःपुनाराशीकृतोनपूर्वक्रमसंनिविष्टबीजोभ
वतिकिंतुविपर्यासंयच्छंतितद्वत् ॥ ३४ ॥

---

१ इदंपूर्वोत्तरान्वयि

संनिवेशोवयवसंस्थानविशेषःक्रमोवा ॥ ३५ ॥ जीवन्मुक्तस्ययोगबलादाधिकारिकनानाशरीरपरिग्रहेपिनमुक्तिस्वरूपप्रच्युतिरित्याह ॥ आश्वस्तेति ॥ आश्वस्तांतःकरणः समाहितचित्तः ॥ सर्वस्योपपादकोहेतुर्निरावरणइति ॥ अनाश्वासविकल्पासारदेहादिमयत्वाशांततृष्णादीनामविद्यावरणप्रयुक्तत्वात्तदभावादित्यर्थः ॥ तथाचजीवन्मुक्तिरेव ज्ञानफलंसाचनपाक्षिकीतिभावः ॥ ३६ ॥ ॥ इतिश्रीवासिष्ठमहारा०तात्पर्यप्रकाशेमुमुक्षुव्यवहारप्रकरणेतृतीयःसर्गः ॥ ३॥ ॥ मुक्तानुभवतोमुक्त्योरविशेषोऽत्रकीर्त्यते ॥ मूलदार्ढ्यायशास्त्रीयंपौरुषंचप्रशस्यते ॥ १ ॥ आत्मनोनित्यमुक्तस्वभावस्याज्ञानावरणमेवबंधः ॥ ज्ञानेनतन्नाशएवमुक्तिः ॥ नष्टेत्वज्ञानेपरिज्ञातश्चित्रव्याघ्रइवदृश्यमानोपि व्यवहारःकौतुकायैवनानर्थायेतिनजीवन्मुक्तविदेहमुक्तयोर्विशेषइतिपूर्वशंकांसमाधायप्रस्तुतमात्मतत्त्वंविस्तरेणोपदेष्टुकामःप्रथमंमूलदार्ढ्यायपुरुषप्रयत्नंसमर्थयति ॥ सौम्ये त्यादिना ॥ हेसौम्यप्रियदर्शन ॥ अंबुत्वेनिश्चलांबुत्वे ॥ समैवनविषमा ॥ तथैवअदेहसदेहमुन्योर्मुक्ततास्वरूपावस्थितिःसमैवेत्यर्थः॥१॥विषयेनचविषयाधीनातुन॥यदिमुक्तिः

तेनैवसन्निवेशेनतथान्येनपुनःपुनः॥ सर्गाकाराःप्रवर्त्तंतेतरंगाःकालवारिधेः॥३५॥ आश्वस्तांतःकरणःशांतविकल्पःस्वरूपसारमयः॥ परमशमामृततृप्तस्तिष्ठतिविद्वान्निरावरणः ॥ ३६॥ ॥इतिश्रीवासिष्ठमहारामायणेवा०दे०मो०मुमुक्षुव्यवहारप्रकरणेभूयोभूयः सर्गानुवर्णनंनामतृतीयःसर्गः॥ ३॥ ॥४॥ ॥वसिष्ठउवाच॥ ॥सौम्यांबुत्वेतरंगत्वेसलिलस्यांबुतायथा॥ समैवाब्धौतथाऽदेहसदेहमुनिमुक्तता॥१॥ सदेहावास्त्वदेहावामुक्ताविषयेनच॥ अनास्वादितभोगस्यकुतोभोज्यानुभूतयः ॥ २॥ जीवन्मुक्तंमुनिश्रेष्ठंकेवलंहिपदार्थवत्॥ पश्यामःपुरतोनास्यपुनर्विघ्नोंतराशयम्॥३॥सदेहादेहमुक्तानांभेदःकोबोधरूपिणाम्॥यदेवांबुतरंगत्वेसौम्यत्वेपितदेव तत्॥ ४॥ नमनागपिभेदोस्तिसदेहादेहमुक्तयोः॥ सस्पंदोप्यथवास्पंदोवायुरेवयथाऽनिलः॥ ५॥

स्वर्गादिरिवविषयाधीनास्यात्तर्हितथैवविषयवैषम्याद्विषमास्यादितिभावः ॥ ननुतथापिभोक्तृत्वाभोक्तृत्वकृतोविशेषोस्त्येवभोगार्थत्वाद्देहस्थितेस्तत्राह ॥ अनास्वादितेति ॥ भोगेषुसत्यबुद्ध्याभोक्तृत्वाभिमानेनभोगास्वादनेहिभोगकृतोविशेषःस्यान्नत्वसंगोदासीनात्मैकत्वदर्शिनःसइतिभावः ॥ २ ॥ तर्हिकथमस्यसदेहत्वंतत्राह ॥ जीवन्मुक्तमिति ॥ मुनिश्रेष्ठंघ्यासपदार्थवत्सदेहवत्पुरतःपश्यामः ॥ स्वकल्पनयेतिशेषः ॥ अंतराशयमंतर्गतंविदेहत्वनिश्चयम् ॥ तथाचयद्यप्ययंसदेहइवास्माभिर्वीक्ष्यतेतथाप्यसौस्वनिश्चयेनांतर्विदेहएवास्तइतिनास्यस्वानुभवतोविशेषइतिभावः ॥ ३ ॥ अबोधएवहिभेदकस्तदपगमेबोधमात्रपरिशेषेकोभेदकइत्यर्थः ॥ सौम्यत्वेनिश्चलतयाप्रसन्नत्वे ॥ तत्अंबु ॥ तदेवअंब्वेव ॥ ४ ॥ अंबुनिकदाचिदत्वच्छत्वादिकृतोविशेषोपिस्यादितिदृष्टांतांतरेणोक्तंसमर्थयते ॥ नमनागिति ॥ ५ ॥

अत्रकचित्पुस्तकेषु मयोक्तंकेवलीभावंतत्तत्स्मरणंजीवनम् ॥ सदेहस्यविदेहस्यसमतैवसदाशिवा इतिश्लोकोऽधिकःपठ्यतेतस्यायमर्थः ॥ ननुवायुःस्पंदः...

दिकंपहेतुस्त्वगिंद्रियवेद्यश्च अस्पंदस्तुतद्विपरीतइतितत्रापिभेदोऽस्त्येवेतिकथंतदभावेसौदृष्टांतस्तत्राह ॥ मयेति ॥ हेरामत्वंसर्वत्रउक्तंविवक्षितंतत्तद्दृष्टांतस्मरणस्यजीवनंसारभूतंकेवलीभावंवस्तुनःस्वरूपाप्रच्युतिलक्षणंमयउपमिनुनत्वविवक्षितंकार्यभेदकृतंवैलक्षण्यंकल्पयेत्यर्थः ॥ तथाचैकांशेनदृष्टांतोनसर्वांशेइतिभावः॥ मिनोतेरवगणकार्यस्यानित्यत्वाच्छपिलोटिमयेतिरूपम् ॥ तथासतिफलितमाह ॥ सदेहस्येति ॥ किंचसदेहविदेहबंधमोक्षादिव्यवहारोप्यज्ञदशाकल्पनयैवनपरमार्थदृशेत्याह ॥ सदेहेति ॥ अस्माकंवसिष्ठस्यतस्यव्यासस्यापिसदेहाविदेहावामुक्तताप्रमायाःपरमार्थदृष्टेरास्पदंविषयोनास्तिकिंतुअविभागिनीद्वैतशून्यास्वात्मैकतैवास्तीतितल्लाभरूपेज्ञानफलेविशेषाभावान्नज्ञानस्यानित्यफलतादोषशंकावकाशोनापिज्ञानोदयेदेहपातापत्तिः ॥ स्वविरोध्यंशस्यैवज्ञानेनबाधाद्देहधारणस्यचप्रारब्धफलत्वेनज्ञानतुल्यत्वेनोपजीव्यत्वेनचज्ञानाविरुद्धत्वादुपादाननिद्रानाशेपिस्वप्नसंस्कारस्यकंचित्कालमनुवृत्तिवदविद्योच्छेदेपियावत्प्रारब्धंदेहादिप्रतिभासोपपत्तेरितिभावः ॥ ६ ॥ इत्थंनिरस्तेसंशयेप्रकृतस्यावसरंदर्शयति ॥ तस्मा

सदेहावाविदेहावामुक्ततानप्रमास्पदम् ॥ अस्माकमपितस्यास्तिस्वैकतास्त्यविभागिनी ॥ ६ ॥ तस्मात्प्रकृतमेवेदंशृणुश्रवणभूषणम् ॥
मयोपदिश्यमानंत्वंज्ञानमज्ञांध्यनाशनम् ॥ ७ ॥ सर्वमेवेहहिसदासंसारेरघुनंदन ॥ सम्यक्प्रयुक्तात्सर्वेणपौरुषात्समवाप्यते ॥ ८ ॥
इहहींदोरिवोदेतिशीतलाह्लादनंहृदि ॥ परिस्पंदफलप्राप्तौपौरुषादेवनान्यतः ॥ ९ ॥

दिति ॥ अज्ञानमज्ञासैवांध्यंतस्यनाशनम् ॥ ७ ॥ ननुशुकादीनांशमदमादिसाधनसंपन्नानांश्रवणंफलितंकथमन्येषामाधुनिकानांतत्फलिष्यतिसाधनानांदुःसंपादत्वादित्याशंक्यपुरुषप्रयत्नस्यासाध्यंनास्तीत्याह ॥ सर्वमेवेति॥ सर्वेणसदासर्वमेवावाप्यतेतर्हिकथंक्वचिद्यत्नवैफल्यदर्शनंतत्राह ॥ सम्यगिति ॥ अनुपरमएवसम्यक्प्रयोगः॥ समवाप्यतेसंप्राप्यते ॥८॥ परिस्पंदःशास्त्रविहितकायवाक्चित्तचलनरूपंकर्मतस्यफलंचित्तशुद्धिद्वाराज्ञानंतत्प्राप्तौसत्यांहृदिशीतलंकामक्रोधादिसंतापाप्रतिहतमाह्लादनंजीवन्मुक्तिसुखमुदेति ॥ तथाचश्रुतिः ॥ सएकोब्रह्मणआनंदःश्रोत्रियस्यचाकामहतस्येति ॥ स्मृतिश्च यच्चकामसुखंलोकेयच्चदिव्यंमहत्सुखम् ॥ तृष्णाक्षयसुखस्यैतेनार्हतःषोडशींकलामिति॥ तत्तुसर्वंपौरुषादेवभवतिनान्यतइतिपुरुषप्रयत्नएवनिर्भरःकार्यइतिभावः ॥ ९ ॥

१ अत्रसदेहादेहमुक्त्यैक्यमुपमेयं उक्तंविवक्षितं तत्सादृश्यार्थंस्मर्यतेतत्स्मरणंसस्पंदास्पंदानिलैक्यमुपमानंतस्यजीवनंउपमेयसादृश्योल्लासापादकंकेवलीभावंपरिस्पंदत्यागात्केवलेनैकांशेनऐक्यसादृश्यभावेनउपमेयंमयउपमाविषयंकुरु ॥

ननुदैवप्रातिकूल्येपौरुपंव्यर्थंदृश्यते तथाचश्रेयांसिबहुविघ्नानीतिप्रवादान्नतःफलाश्वासइत्याशंक्यदैवस्यपौरुषेतभावंदीर्बल्यंचवक्ष्यमाणमभिप्रेत्यस्वतंत्रंतन्निरस्यति ॥ पौरुष
मिति ॥ गमनभोजनादिपौरुषस्पंदद्वारादेशांतरंतृप्त्यादिवानयआपयतप्रत्यक्षतोदृष्टमितिनयत्तदस्यपूर्वंग्रवा यद्दैवंनदृष्टंतत्रविद्यतइतिपदभंगेनोत्तरग्रवान्वयः ॥ १० ॥ किंत
त्पौरुषंयत्यशस्यतेतदाह ॥ साध्विति ॥ अंगपदग्रहणंवाचोप्युपलक्षणम् ॥११ ॥ ईहतेचेष्टते ॥ क्वचिद्विघ्नैःप्रतिघातःशास्त्रोक्तक्रमभंशादेवेतिसूचनायक्रमादित्युक्तम् ॥ सांगात्क
र्मण.फलावश्यंभावनियमादितिभावः ॥ १२ ॥ तमेवनियमंबहुशःसंवादेनद्रढयति ॥ पौरुषेणेत्यादिचतुर्भिः ॥ १३ ॥ अंभोरुहास्पदंपद्मासनंअधिष्ठायेतिशेषः ॥ ब्रह्मतांहिर

पौरुषंस्पंदफलवदृष्टंप्रत्यक्षतोनयत् ॥ कल्पितंमोहितैर्मंदैर्दैवंकिंचिन्नविद्यते॥१०॥ साधूपदिष्टमार्गेणयन्मनोंगविचेष्टितम् ॥ तत्पौरुषं तत्सफलमन्यदुन्मत्तचेष्टितम् ॥ ११ ॥ योयमर्थंप्रार्थयतेतदर्थंचेहतेक्रमात् ॥ अवश्यंसतमाप्नोतिनचेदर्धान्निवर्त्तते ॥ १२ ॥ पौरुषेण प्रयत्नेनत्रैलोक्यैश्वर्यसुंदराम् ॥ कश्चित्प्राणिविशेषोहिशक्रतांसमुपागतः ॥ १३॥ पौरुषेणैवयत्नेनसहसांभोरुहास्पदम् ॥ कश्चिदेवचिदुल्लासोब्रह्मतामधितिष्ठति ॥ १४ ॥ सारेणपुरुषार्थेनस्वेनैवगरुडध्वजः ॥ कश्चिदेवपुमानेवपुरुषोत्तमतांगतः ॥ १५ ॥ पौरुषेणैवयत्नेन ललनावलिताकृतिः ॥ शरीरीकश्चिदेवेहगतश्चंद्रार्द्धचूडताम् ॥ १६ ॥ प्राक्तनंचैहिकंचेतिद्विविधंविद्धिपौरुषम् ॥ प्राक्तनोद्यतनेनाशुपुरुषार्थेनजीयते ॥ १७॥ यत्नवद्भिर्दृढाभ्यासैःप्रज्ञोत्साहसमन्वितैः ॥ मेरवोपिनिगीर्यंतेकैवप्राक्पौरुषेकथा ॥ १८॥ शास्त्रनियंत्रितपौरुषपरमापुरुषस्यपुरुषतायास्यात् ॥ अभिमतफलभरसिद्ध्यैभवतिहिसैवान्यथात्वनर्थाय ॥ १९॥

ण्यगर्भतांगुणमूर्त्तिसारूप्यमुक्त्वा ॥ एवमुत्तरयोरपि ॥ १४ ॥ १५ ॥ १६ ॥ पुरुषार्थेनपौरुषेण ॥ जीयतेअभिभूयते ॥ १७ ॥ नन्वनंतकोटिकल्पार्जितानामनंतानांप्राक्तनकर्मणांकथमल्पेनाद्यतनेनपौरुषेणजयस्तत्राह ॥ यत्नवद्भिरिति ॥ निगीर्यंतेप्रलयाधिकारिदेवताभावंप्राप्तैःपुरुषैरित्यर्थः ॥ यद्यप्यनंतानिकर्माणितथापितेषांमूलैक्यात्तन्नाशेनजयःसुकरइत्यभिप्रेत्याह ॥ कैवेति ॥१८ ॥ उक्तमर्थमुपसंहरंस्तद्भ्रंशेऽनर्थमाह ॥ शास्त्रेति ॥ शास्त्रैःश्रुत्यादिभिर्नियंत्रितंनियमितंयत्पौरुषंतदेवपरममवश्यसंपाद्यंयस्यास्तथाविधायापुरुषस्यपुरुषतानिरंतरोद्युक्तताभ्यात्सैवाभिमतफलभरस्यसिद्धैभवतिहि ॥ अन्यथाअशास्त्रीयातुअनर्थायेत्यर्थः ॥ १९ ॥

१ नास्माफल्यमितिक्वचित्पाठः २. कृतिम.

नन्वल्पधनबलबुद्धीनांकथंमहाधनबलबुद्धिसाध्यपौरुषफललाभइत्याशंक्यतेषामपिस्वशक्यपौरुषपरंपर्यैवेहजन्मनिजन्मांतरेवामहाधना
पुरुषस्यदुर्दशासुदशावासैदैवभवतीत्यभिप्रेत्यशास्त्रीयप्रयत्नतच्छैथिल्ययोःफलतोमहदंतरंदर्शयति॥कस्यांचिदिति॥पुंसःशास्त्रीयप्रयत्नशैथिल्येस्वयंस्वतएवस्वाभाविकरागादिव
शादात्मनोदुःस्थितिरसन्मार्गस्थितिस्तद्वशात्कस्यांचिद्दारिद्र्यरोगबंधनादिदुर्दशायांस्वहस्तादेरप्यस्वाधीनत्वादंगुल्यग्राणांनिपीडितेनपीडासाध्येनापिनिकुंचनेनसंपाद्यादेकचु
लुकात्करसंमितसलिलात्मुखेआउप्यतेक्षिप्यतइत्यावापस्तथाविधोबिंदुरपिदुर्लभत्वाद्द्रुमतोभवति ॥ तस्यैवशास्त्रीययत्नदार्ढ्येधर्मोत्कर्षात्कस्यांचित्प्रियव्रतादिवत्सप्तद्वीपा
धिपत्यदशायांभर्त्तव्येभ्यःपुत्रादिभ्यउचितोदायादिसंविभागस्तत्करणेजलराश्यादयोऽनरालीकृतागर्भीकृतायया तथाविधासंपूर्णापृथ्व्यपिनपृथ्वीनमहतीभवेत् ॥ नवद्रुमता
भवेदित्यर्थः ॥ तथाहिप्रसिद्धंपुराणे ॥ प्रियव्रतोत्तानपादौतावेवावांस्तुहीतरूइति ॥ २० ॥ ॥ इतिश्रीवासिष्ठमहारा॰तात्पर्य्यप्रकाशेमुमुक्षुव्यवहारप्रकरणेचतुर्थःसर्गः ॥४॥

**कस्यांचित्स्वयमात्मदुःस्थितिवशात्पुंसोदशायांशनैरंगुल्यग्रनिपीडितैकचुलुकादावापबिंदुर्नद्रुः॥ कस्यांचिज्जलराशिपर्वतपुरद्वीपांत**
**रालीकृताभर्त्तव्योचितसंविभागकरणेपृथ्वीनपृथ्वीभवेत् ॥ २० ॥ ॥इतिश्रीवासिष्ठमहारा॰वा॰दे॰मो॰मुमुक्षु॰पौरुषप्रकरणं**
**नामचतुर्थःसर्गः॥४॥ ॥छ॥ ॥श्रीवसिष्ठउवाच॥ ॥प्रवृत्तिरेवप्रथमंयथाशास्त्रविहारिणाम्॥प्रभैववर्णभेदानांसाधनीसर्वकर्म**
**णाम् ॥ १ ॥ मनसावांछ्यतेयच्चयथाशास्त्रंनकर्मणा॥ साध्यतेमत्तलीलासौमोहनीनार्थसाधनी ॥ २ ॥ यथासंयततेयेनतथातेनानुभू**
**यते॥ स्वकर्मैवेतिचास्तेन्याव्यतिरिक्तानदैवदृक् ॥ ३ ॥**

प्राबल्येपौरुषस्यात्राप्यवश्यंफलसंगमे ॥ दैवस्याव्यतिरेकेचयुक्तिदृष्टांतईर्यते ॥ १ ॥ यत्पूर्वमुक्तंपौरुषातिरेकेणदैवस्यासत्त्वंदैवात्पौरुषस्यप्राबल्यंपौरुषादेवपुरुषार्थसिद्धिरिति
चतत्सर्वमुपपत्तिभिःसमर्थयितुंप्रतिजानीते ॥ प्रवृत्तिरेवेति ॥ शास्त्रमनतिक्रम्यविहारिणांवाङ्मनःकायैर्व्यवहरणशीलानामधिकारिणांसर्वकर्मणांसर्वेषांपुरुषार्थानांसिद्धौप्र
थमंप्रवृत्तिरेवकारणंयथानीलपीतादिवर्णभेदानामभिव्यक्तौप्रभैवसाधनीतद्वत् ॥ तस्माच्छास्त्रंप्रमाणंतेकार्याकार्यव्यवस्थितौ ॥ आरुरुक्षोर्मुनेर्योगंकर्मकारणमुच्यतइत्यादि
स्मृतेरितिभावः ॥ १ ॥ ननुतृप्त्यादिवद्दृष्टफलत्वात्क्रियायाःकस्तत्साधनेशास्त्रीयनियमस्योपयोगस्तत्राह ॥ मनसेति ॥ असौमत्तलीलाउन्मत्तचेष्टेव ॥ साध्यतेतेनेतिशेषः ॥
अतएवनपुरुषार्थसाधनीप्रत्युतमोहनी ॥ दृष्टफलत्वेप्यशास्त्रीयोपायस्यान्वयव्यतिरेकादर्शनेनाहेतुत्वादितिभावः ॥ २ ॥ शास्त्रीयस्ययत्नस्यशास्त्रीयमेवफलमशास्त्रीयस्य
चाशास्त्रीयमेवेत्यौचित्यबलाच्चव्यवस्थासिद्धिरित्याह ॥ यथेति ॥ ननुदैवादुभयवैपरीत्यमपिस्यात्तत्राह ॥ आस्तेन्याव्यतिरिक्तानदैवदृगिति ॥ प्राक्तनकर्मैवफलावस्थंदैवमि
त्युच्यतेनततोतिरिक्तंदैवंदृश्यतइत्यर्थः ॥ ३ ॥

उक्तमर्थमेवस्फुटयति॥ उच्छास्त्रमिति॥ शास्त्रितंशास्त्रनियतम्॥ प्रातिपदिकाद्वात्वर्थेणिचिक्तः॥४॥हुडौमेषौ॥ कदाचित्समौकदाचिदसमौ॥ अत्रअनयोर्मध्ये॥५॥तंत्रेणशास्त्रीयनियमेन॥ अतंद्रेणेतिपाठेनिरालस्येनपुंसा ॥ ६ ॥ ननुमनुष्याणांत्रिभिर्ऋणवाजायतेइतिश्रुतौदेवादिऋणित्वश्रवणात्तस्मादेपांतन्नप्रियंयदेतन्मनुष्याविद्युरितिश्रवणाच्चैतरस्यावश्यंविघ्नाचरणेकृतोपियत्नोविफलःस्यादित्याशंक्याह॥ द्वाविति॥ दोपेषुसत्स्वेवदेवानांविघ्नशक्तेःस्वप्रयत्नेनदोपजयेतेपांविघ्नशक्तिःकुंठीभवतीतिभावः ॥ ७ ॥ ननुशास्त्रीयमार्गेयतमानानामपिकचिद्रोगाद्यनर्थःकथंदृश्यतेतत्राह॥ अनर्थइति॥ तथाचतदपिजय्यमेवेतिभावः ॥ ८ ॥ शुभेनाद्यतनपौरुपेण॥ उद्युक्तंविघ्नाचरणायेत्यर्थः॥ ९॥

उच्छास्त्रंशास्त्रितंचेतिद्विविधंपौरुषंस्मृतम्॥ तत्रोच्छास्त्रमनर्थायपरमार्थायशास्त्रितम्॥ ४॥ द्वौहुडाविवयुध्येतेपुरुषार्थौसमासमौ॥
प्राक्तनश्चैहिकश्चैवशाम्यत्यत्राल्पवीर्यवान्॥ ५॥ अतःपुरुषयत्नेनयतितव्यंयथातथा॥ पुंसातंत्रेणसद्योगाद्येनाश्वद्यतनोजयेत्॥ ६॥
द्वौहुडाविवयुध्येतेपुरुषार्थौसमासमौ॥ आत्मीयश्चान्यदीयश्चजयत्यतिवलस्तयोः॥ ७॥ अनर्थःप्राप्यतेयत्रशास्त्रितादपिपौरुषात्॥
अनर्थकर्तृवलवत्तत्रज्ञेयंस्वपौरुषम्॥८॥ परंपौरुषमाश्रित्यदंतैर्दंतान्विचूर्णयन्॥ शुभेनाऽशुभमुद्युक्तंप्राक्तनंपौरुषंजयेत्॥९॥प्राक्तनःपुरुषार्थौसौमांनियोजयतीतिधीः॥ बलादधस्पदीकार्याप्रत्यक्षादधिकानसा॥ १०॥ तावत्तावत्प्रयत्नेनयतितव्यंसुपौरुषम्॥प्राक्तनंपौरुषंयावदशुभंशाम्यतिस्वयम्॥ ११॥ दोषःशाम्यत्यसंदेहंप्राक्तनोद्यतनैर्गुणैः॥ दृष्टांतोत्रह्यस्तनस्यदोषस्याद्यगुणैःक्षयः॥ १२॥
असद्दैवमधःकृत्वानित्यमुद्रिक्तयाधिया॥ संसारोत्तरणंभूत्यैयतेताधातुमात्मनि॥ १३॥ नगंतव्यमनुद्योगैःसाम्यंपुरुषगर्दभैः॥ उद्योगस्तुयथाशास्त्रंलोकद्वितयसिद्धये॥ १४॥ संसारकुहरादस्मान्निर्गतव्यंस्वयंवलात्॥ पौरुषंयत्नमाश्रित्यहरिणेवारिपंजरात्॥ १५॥
प्रत्यहंप्रत्यवेक्षेतदेहंनश्वरमात्मनः॥ संत्यजेत्पशुभिस्तुल्यंश्रयेत्सत्पुरुषोचितम्॥ १६॥

पुरुषार्थःकर्मफलम्॥ अधस्पदीकार्यापादेनाक्रमणीयाविनाशनीयेतियावत्॥ अधःशिरसीपदेइतिसत्त्वम्॥ १० ॥ सुपौरुषमितिक्रियाविशेषणम्॥ स्वयमितिनिःशेषतालाभायविशेषणंपरतःशांतितदपगमेपुनरुद्भवोमाभूदिति॥ ११ ॥ प्राक्तनएवप्रबलःकिंनस्यात्तत्राह॥ दोषइति॥ ह्यस्तनस्यपूर्वेद्युस्तनस्यदोषस्याजीर्णादेः॥ गुणैर्लंघनादिभिः॥ १२ ॥ असद्दैवंप्राक्तनदुरदृष्टमद्यतनसुकृतैरुद्रिक्तयाधियाअधःकृत्वापरिभूयआत्मनिसंसारोत्तरणमाधातुंसंपादयितुंभूत्यैशमदमश्रवणादिसंपदेयतेत॥ १३॥ लोकद्वितयंस्वर्गापवर्गौ॥ १४ ॥ हरिणासिंहेनअरिभिर्मनुष्यैःकृताद्बंधनपंजरादिव॥ विष्णुनाअसुरैःप्रयुक्तान्मायापंजरादिवेतिवा॥ १५ ॥ तुल्यंतुल्यताम्॥ भावप्रधानोनिर्देशः॥ सत्पुरुषोचितंसाधुसंगमसच्छास्त्रादिश्रयेत्॥ १६॥

भस्मसात्भस्मप्रायंव्यर्थमितियावत् ॥ १७ ॥ नकिंचनप्राक्तनशुभाशुभातिरिक्तमित्यर्थः ॥ १८ ॥ अथतमेवार्
कलिलंद्रवपिच्छिलम् ॥ वयःसर्वपुरुषार्थसाधनंयौवनम् ॥ भस्मसात्भस्मप्रायंव्यर्थमितियावत् ॥ तत्सिद्धमयतनशुभपौरुषमुत्सृज्येत्यर्थः ॥ एवंचसर्वव्यवहारकदैवस्यातिप्रसिद्धप्रत्य
दृष्टरूपयोःशुभाशुभयोःप्रत्यक्षमानंश्रुतिः ॥ दृष्टयोस्त्वन्वयव्यतिरेकसहकृतंचक्षुरादि ॥ तत्सिद्धमयतनशुभपौरुषमुत्सृज्येत्यर्थः ॥ स्वभुजाभ्यांभीतइतिगम्यमानत्वाद्भीत्रार्थानामि
क्षश्रुतिप्रमाणंप्रभुसंमितमुत्सृज्यपौरुषप्रयत्नफलसंदिग्धःसन्प्रयत्नफलविघटकानुमानिकंदैवंप्रत्यप्रयत्नाद्बिभ्यन्नपसरतियः ॥ स्वभुजाभ्यांभीतइतिगम्यमानत्वाद्भीत्रार्थानामि
त्यपादानता ॥ १९ ॥ नदृष्टाश्रेष्ठानांपौरुषेणैवपुरुषार्थप्राप्तानांविश्वामित्रादीनांदृष्टिर्येस्तेषाम् ॥२०॥ विवेकंनित्यानित्यादिविवेकोपलक्षितसाधनचतुष्टयम् ॥ २१॥ श्रवणा
दिप्रवणतांस्थिरीकर्तुमन्यचेष्टांनिंदति ॥ चित्तेइति ॥ यथाशास्त्रंनिजैरीहितैःश्रवणमननादिचेष्टाभिरर्थंपरमार्थभूतमात्मतत्त्वमचिंतयतामतएवतंपुरुषार्थमसंसाधयतामेवमूढा
नांदुरंतनरकादिहेतुत्वाद्दुष्टमीप्सितंभोगलिप्सांधिक् ॥ तस्यशोच्यतेत्यर्थः ॥ एवकारोयोग्यजन्मलाभेपितदसाधनेपुनस्तद्दौर्लभ्यद्योतनार्थः ॥ तथाचश्रुतिः ॥ इहचेदवेदीदथ

किंचित्कांतान्नपानादिकलिलंकोमलंगृहे॥ व्रणेकीटइवास्वाद्यवयःकार्यंनभस्मसात्॥१७॥ शुभेनपौरुषेणाशुभमासाद्यतेफलम्॥
अशुभेनाशुभंनित्यंदैवंनामनकिंचन॥१८॥प्रत्यक्षमानमुत्सृज्ययोनुमानमुपैत्यसौ॥स्वभुजाभ्यामिमौसर्पाविितिप्रेक्ष्यपलायते॥१९
दैवंसंप्रेरयतिमामितिदग्धधियांसुखम्॥ अदृष्टश्रेष्ठदृष्टीनांदृष्ट्वालक्ष्मीर्निवर्त्तते ॥ २० ॥तस्मात्पुरुषयत्नेनविवेकंपूर्वमाश्रयेत् ॥ आत्म
ज्ञानमहार्थानिशास्त्राणिप्रविचारयेत्॥२१॥चित्तेचिंतयतामर्थंयथाशास्त्रंनिजेहितैः॥असंसाधयतामेवमूढानांधिग्दुरीप्सितम्॥ २२
पौरुषंचनवानंतंनयत्नमभिवांछ्यते॥ नयत्नेनापिमहताप्राप्यतेरत्नमश्मतः॥ २३ ॥ यथाघटःपरिमितोयथापरिमितःपटः॥ नियतःप
रिमाणस्थःपुरुषार्थस्तथैवच॥ २४ ॥ सचसच्छास्त्रसत्संगसदाचारैर्निजंफलम्॥ ददातीतिस्वभावोयमन्यथानार्थसिद्धये ॥ २५ ॥ स्व
रूपंपौरुषस्यैतदेवंव्यवहरन्नरः॥ यातिनिष्फलयत्नत्वंनकदाचनकश्चन॥ २६ ॥

सत्यमस्तिनचेदिहावेदीन्महतीविनष्टिरिति ॥ २२ ॥ नान्वियंतंकालंपौरुषंकार्यमित्यवध्यनवगमेनतस्यानंत्यात्परिश्रमबाहुल्याच्चकथंतत्रप्रवृत्तिस्तत्राह ॥ पौरुषंचेति ॥ तस्यांन
षमनंतमनवधिकंन ॥ साक्षात्कारोदयस्यैवअवधित्वात् ॥ यत्नंपरिश्रममभिलक्ष्यचनवांछ्यतेनापेक्ष्यते॥प्रत्यक्षावगमंधर्म्यंसुसुखंकर्तुमव्ययमितिभगवद्वचनादितिभावः॥नन्वि
दंपूर्णाहुत्यासर्वान्कामानवाप्नोतीतिवत्प्ररोचनामात्रंश्रमाधिक्येसत्येवफलाधिक्यनियमादित्याशंक्यान्वयव्यभिचारमाह ॥ नेति ॥ रत्नतत्त्वपरीक्षाकुशलानांविनैवश्रमंलाभा
तिशयदर्शनाद्व्यतिरेकेव्यभिचारोपिबोध्यः ॥२३॥ पूर्वार्द्धोक्तंदृष्टांतेनद्रढयति ॥ यथेति ॥ घटोजलेयत्त्रापरिच्छेदकत्वेनपटस्तुदैर्घ्यादिनापरिमितःप्रमाणैर्निश्चितस्तथैवपुरुषार्थः
पौरुषयत्नोपिपरिमाणेसाक्षात्कारफलावधौतिष्ठतीतिपरिमाणस्थोनियतएव ॥ २४ ॥ सपौरुषयत्नःसदाचारैःसहितइतिशेषः ॥२५॥ स्वरूपंपौरुषस्यैतदित्युक्तोपसंहारः ॥ ता
दृशस्यफलाव्यभिचारमाह ॥ एवमिति ॥ २६ ॥

१ तैलमश्मतइतिक्वचित्पाठः

उक्तंद्रढयितुमन्यत्रापिन्याप्यस्यपौरुषस्यफलाव्यंभिचारंदर्शयति ॥ दैन्येति ॥ अन्येनलहरिश्चंद्रादयः ॥ २७ ॥ यदिनश्रमापेक्षातर्हितेतत्करिष्यामःकिमधुनैवतेनेत्याशंक्या
ह ॥ आवाल्यादिति ॥ अलमत्यंतमभ्यस्तैर्नतुसहसाकृतैःकोमलकंटकायमानैरित्यर्थः ॥ २८ ॥ प्रत्यक्षतोदृष्टमस्मदादिभिर्जीवन्मुक्तैरित्यर्थः ॥ कृतंसाधनतः ॥ २९ ॥ यद्ये
वंतर्हिनकुतःसर्वैयत्नंतेतत्राह ॥ आलस्यमिति ॥ अनर्थहेतुत्वादर्थविघातकत्वाच्चानर्थः ॥ बहुधनकःसंपन्नतमः ॥ शेषाद्विभाषेतिकप् ॥ बहुश्रुतःपंडितः॥सागरांतैःसमुद्रांतैःसहि
ताअवनिर्भूमिः॥ तस्मादालस्यमुत्सृज्यबाल्यात्प्रभृतिसत्संगमादिपरेणभाव्यमितिमुख्यःपक्षइतिभावः ॥ ३० ॥ यद्यप्यत्यंतबाल्यप्रभृतिकर्त्तुंनशक्यतेतर्हियौवनमारभ्यवायति
तव्यमित्याह ॥ बाल्यइति ॥ नरःअविरतैश्चपलैर्बालैःकल्पिताभिःक्रीडाभिर्लोलेबाल्येगतेसतिदोर्दंडाभ्यांगुरुशुश्रूषादिसमर्थाभ्यांदोर्भ्यांमंडितंवयोयौवनंततःप्रभृतिपदपदार्थ

दैन्यदारिद्र्यदुःखार्त्ताअप्यन्येपुरुषोत्तमाः॥पौरुषेणैवयत्नेनयातादेवेंद्रतुल्यताम्॥२७॥आवाल्यादलमभ्यस्तैःशास्त्रसत्संगमादिभिः॥
गुणैःपुरुषयत्नेनस्वार्थःसंप्राप्यतेयतः॥ २८॥इतिप्रत्यक्षतोदृष्टमनुभूतंश्रुतंकृतम्॥दैवात्तमितिमन्यंतेयेहतास्तेकुबुद्धयः॥ २९॥ आल
स्यंयदिनभवेज्जगत्यनर्थःकोनस्याद्बहुधनकोबहुश्रुतोवा॥ आलस्यादियमवनिःससागरांतासंपूर्णानरपशुभिश्चनिर्धनैश्च ॥ ३० ॥
बाल्येगतेऽविरतकल्पितकेलिलोलेदोर्दंडमंडितवयःप्रभृतिप्रयत्नात् ॥ सत्संगमैःपदपदार्थविशुद्धबुद्धिःकुर्यान्नरःस्वगुणदोषविचारणा
नि॥ ३१॥ ॥श्रीवाल्मीकिरुवाच॥ ॥इत्युक्तवत्यथमुनौदिवसोजगामसायंतनायविधयेस्तमिनोजगाम॥स्नातुंसभाकृतनमस्क
रणाजगामश्यामाक्षयेरविकरेणसहाजगाम ॥३२॥ ॥इतिश्रीवासिष्ठमहा०वा०दे०मो०मुमुक्षुव्यवहारप्रकरणेपौरुषस्थापनंना
मपंचमःसर्गः॥५॥ ॥प्रथमोदिवसः॥ ॥ ॥ ॥ ॥ ॥ ॥

विशुद्धबुद्धिःपदतदर्थतत्परीक्षाकुशलोव्युत्पन्नःसन्नित्यर्थः ॥ गुरुसतीर्थ्याभिज्ञतमादिसत्संगमैः स्वस्यआत्मनोगुणानांशांत्यादीनांदोषाणांरागादीनांचार्थानर्थपर्यवसानपर्यालो
चनलक्षणानिविचारणानिकुर्यात् ॥३१ ॥ श्रीवाल्मीकिरुवाचारिष्टनेमिनंप्रतीतिदेवदूतोक्तिः ॥ मुनौवाल्मीकौइतिउक्तप्रकारेणवसिष्ठोक्तंभरद्वाजंप्रत्युक्तवतिसतिदिवसोजगा
म ॥ इनःसूर्यश्चास्तंजगाम॥ भरद्वाजादिमुनिसभाचवाल्मीकयेकृतनमस्करणासायंतनायसंध्योपास्त्यग्निहोत्रादिविधयेस्नातुंजगाम॥अथश्यामायारात्रेःक्षयेसतिप्रातःरविकरे
णआतपेनसहआजगाम ॥ पुनर्वाल्मीकिसन्निधिमित्यर्थः ॥ उत्तरत्रापिसर्वत्रायंश्लोकएवमेवव्याख्येयोनतुमुनौवसिष्ठेइत्युक्तवतीति ॥ उत्तरत्रविस्तरेणतत्रतत्रदशरथसभो
त्थानवर्णनस्याह्निकशेषानुष्ठानस्यरात्रौरामादिभिःश्रुतार्थचिंतनस्योषःकालसूर्योदयादेश्चवर्णनविस्तरस्याकांक्षप्रस्तुतप्रलापत्वापत्तेः ॥३२॥ ॥इतिश्रीवासिष्ठमहारा०तात्पर्य
प्रकाशेमुमुक्षुव्यवहारप्रकरणेपंचमःसर्गः ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

प्रोच्यतेबलवद्दैवंप्राक्तनंवास्वपौरुषम् ॥ १ ॥ उक्तमेवार्थंप्रतिष्ठापयिष्यन्नाह ॥ ... ॥ १ ॥ किंतद्बलंतद्दर्शयति ॥ यथेति ॥
यत्रास्तिप्रबलंदैवंतत्रापिपरपौरुषम् ॥ प्रोच्यतेबलवद्दैवंप्राक्तनंवास्वपौरुषम् ॥ दूरतःप्रोज्झ्यत्यक्त्वा ॥ उत्तारयेत् संसारादितिशेषः ॥ १ ॥ किंतद्बलंतद्दर्शयति ॥ वालइति ॥ ४ ॥ चारुणा
प्राक्तनपौरुषादन्यद्दैवंनास्ति ॥ तद्दैवंतदधीनोहंनस्वतंत्रइतिदैष्टिकतामितियावत् ॥ अस्तुप्राक्तनकर्मैवदैवंकिंततस्तत्राह ॥ प्राकृताःपामराः ॥ ६ ॥ यत्रापिदैवप्राब
२ ॥ हाकष्टमितिदुःखरूपेणपरिणतंप्राक्तनंकर्मोच्यतेतदेवदैवमित्यर्थः ॥ ३ ॥ इतराकारंस्वरूपांतरवत् ॥ लोभयंतीतिलोभाविषयसुखलवास्तेषुलंपटाःसंतोयेनयतंतेतेदीनाः ॥
आचारेणप्रायश्चित्तादिना ॥ शुभतामशुभाक्षमताम् ॥ ५ ॥

श्रीवसिष्ठउवाच ॥ तस्मात्प्राक्पौरुषाद्दैवंनान्यत्तत्प्रोज्झ्यदूरतः ॥ साधुसंगमसच्छास्त्रैर्जीवमुत्तारयेद्बलात् ॥ १ ॥ यथायथाप्रयत्नःस्या
द्भवेदाशुफलंतथा ॥ इतिपौरुषमेवास्तिदैवमस्तुतदेवच ॥ २ ॥ दुःखाद्यथादुःखकालेहाकष्टमितिकथ्यते ॥ हाकष्टशब्दपर्यायस्तथाहादै
वमित्यपि ॥ ३ ॥ प्राक्स्वकर्मेतराकारंदैवंनामनविद्यते ॥ बालःप्रबलपुंसेवतज्जेतुमिहशक्यते ॥ ४ ॥ ह्यस्तनोदुष्टआचारआचारेणाद्य
चारुणा ॥ यथाशुभतामेतिप्राक्तनंकर्मतत्तथा ॥ ५ ॥ तज्जयाययतंतेयेनलोभलवलंपटाः ॥ तेदीनाःप्राकृतामूढाःस्थितादैवपराय
णाः ॥ ६ ॥ पौरुषेणकृतंकर्मदैवाद्यदभिनश्यति ॥ तत्रनाशयितुर्ज्ञेयंपौरुषंबलवत्तरम् ॥ ७ ॥ यदेकवृंतफलयोरथैकंशून्यकोटरम् ॥ तत्र
प्रयत्नःस्फुरितस्तथातद्रससंविदः ॥ ८ ॥ यस्मायांतिजगद्भावाःसंसिद्धाअपिसंक्षयम् ॥ क्षयकारकयत्नस्यत्वत्रज्ञेयंमहद्बलम् ॥ ९ ॥ द्वौहु
डाविवयुध्येतेपुरुषार्थौपरस्परम् ॥ यएवबलवांस्तत्रसएवजयतिक्षणात् ॥ १० ॥ भिक्षुकोमंगलेभेननृपोयत्क्रियतेबलात् ॥ तदमात्य
भपौराणांप्रयत्नस्यबलंमहत् ॥ ११ ॥ पौरुषेणान्नमाक्रम्ययथादंतेनचूर्ण्यते ॥ अन्यःपौरुषमाश्रित्यतथाशूरेणचूर्ण्यते ॥ १२ ॥ अन्न
भूताहिमहतांलघवोयत्नशालिनाम् ॥ यथेष्टंविनियोज्यंतेतेनकर्मसुलोष्टवत् ॥ १३ ॥

ल्यप्रसिद्धिस्तत्रापिपौरुषस्यैवप्राबल्यमितिदर्शयति ॥ पौरुषेणेति ॥ ७ ॥ नन्वस्तुपुरुषतंत्रेष्वेवमपुरुषतंत्रेषुतुदैवमेवशरणंस्यात्तत्राह ॥ यदिति ॥ शून्यकोटरंरसशून्यंदृश्यतइति
शेषः ॥ तद्रसंसेवंत्युपभुंक्तेयःपुरुषःकीटादिर्वातस्यप्राक्तनऐहिकोवाप्रयत्नएवतद्रसविघातायस्फुरितः ॥ ८ ॥ एकत्रोक्तंन्यायमन्यत्रापिदर्शयति ॥ यदित्यादिना ॥ यत्यत्र ॥
जगतिप्रसिद्धाभावाःपदार्थाः ॥ ९ ॥ तत्रोक्तंस्मारयति ॥ द्वाविति ॥ १० ॥ राजवंशाभावेपौरामात्यविसृष्टेनमंगलालंकृतेनेभेनगजेनयःकश्चिद्भिक्षुकोपिनृपःक्रियतइतिप्रसि
द्धंयत्तदितिसंबंधः ॥ ११ ॥ अन्नमदनार्हंचर्वणयोग्यमितियावत् ॥ आत्तमितिपाठेमुखेनगृहीतंतदेव ॥ आक्रम्यनिष्पीड्य ॥ अन्योदुर्बलः ॥ शूरेणप्रबलेन ॥ १२ ॥ हियस्माद्धे
तोः ॥ अन्नभूताउपभोग्यभूताः ॥ लघवोऽल्पबलाः ॥ तेनहेतुना ॥ लोष्टंशुष्कमृत्पिंडः ॥ १३ ॥

आत्मनित्यस्मिन् ॥ अबुद्धिनामूढेन ॥१४॥ तेषांशक्तानामपिभूतानांबलवद्बूतंयत्तदधिष्ठातृनियंतृएतत्सनांविद्यमानप्राणिनांमिथःपरस्परंस्फुटंव्यक्तंनतुदैवंस्थितमित्यन्वयः यत्नस्तेनेतिपाठेतुतेनहेतुनायत्नएवस्थितोनदैवंस्थितमितिभित्त्वाव्याख्येयम्॰ ॥ १५ ॥ अविकल्पाऐकमत्यापन्नेतियावत् ॥ स्वभावधीःस्वारसिकीबुद्धिर्यासैवभिक्षुकराज वस्यकर्तृकर्त्रीप्रजास्थितेश्चधर्तृधारयित्री ॥ पदसंस्कारपक्षेंतरंगंसामान्येनपुंसकंबहिरंगेणविशेष्यसंबंधेननवाध्यते ॥ तथाचमहाभाष्येशास्त्रेणधर्मनियमइतिवार्त्तिकशेष गेनप्रयोगः ॥ शक्यंचानेनश्वमांसादिभिरपिक्षुत्प्रतिहंतुंतत्रशास्त्रेणनियमःक्रियतेपंचपंचनखाभक्ष्याइतीति ॥ १६ ॥ अन्यपौरुषेणान्यस्यफलभोगेअतिप्रसंगमाशंक्यपक्षः माह ॥ भिक्षुकइति ॥ तत्रप्राक्तनंबलवत्पौरुषंवाकारणमित्यन्वयः ॥ १७ ॥ पुरुषंस्पंदयतीतिपुरुषस्पंदोयत्नः ॥ अनुद्वेगवानुद्वेगादुपरतः ॥ तथाविधस्त्विदानींतनएवसंभवा

शक्तस्यपौरुषंदृष्टमदृष्टंवापियद्भवेत् ॥ तद्दैवमित्यशक्तेनबुद्धमात्मन्यबुद्धिना ॥ १४ ॥ भूतानांबलवद्भूतंयत्नदैवमितिस्थितम् ॥ तत्ते षामप्यधिष्ठातृसतामेतत्स्फुटंमिथः ॥ १५ ॥ शास्त्रामात्येभपौराणामविकल्पास्वभावधीः ॥ यासाभिक्षुकराज्यस्यकर्तृधर्तृप्रजास्थितेः ॥ १६ ॥ भिक्षुकोमंगलेभेनतृपोयत्क्रियतेक्वचित् ॥ प्राक्तनंपौरुषंतत्रबलवद्वापिकारणम् ॥ १७ ॥ ऐहिकःप्राक्तनंहंतिप्राक्तनोद्यतनंबलात् ॥ सर्वदापुरुषस्पंदस्तत्रानुद्वेगवान्जयी ॥ १८ ॥ द्वयोरद्यतनस्यैवप्रत्यक्षाद्बलिताभवेत् ॥ दैवंजेतुंयतोयत्नैर्बालोयूनेवशक्यते ॥ १९ ॥ मे घेननीयतेयद्वद्वत्सरोपार्जिताकृषिः ॥ मेघस्यपुरुषार्थोसौजयत्यधिकयत्नवान् ॥ २० ॥ क्रमेणोपार्जितेप्यर्थेनष्टेकार्यानखेदिता ॥ नबलं यत्रमेशक्तंतत्रकापरिदेवना ॥ २१ ॥ यन्नशक्तोमितस्यार्थेयदिदुःखंकरोम्यहम् ॥ तदमारितमृत्योर्मेयुक्तंप्रत्यहरोदनम् ॥ २२ ॥ देशका लक्रियाद्रव्यवशतोविस्फुरंत्यमी ॥ सर्वएवजगद्भावाजयत्यधिकयत्नवान् ॥ २३ ॥ तस्मात्पौरुषमाश्रित्यसच्छास्त्रैःसत्समागमैः ॥ प्र ज्ञाममलतांनीत्वासंसारजलधिंतरेत् ॥ २४ ॥ प्राक्तनश्चैहिकश्चेमौपुरुषार्थौफलद्रुमौ ॥ संजातौपुरुषारण्येजयत्यभ्यधिकस्तयोः ॥ २५ ॥

प्राक्तनस्तस्यप्रागेवविच्छिन्नत्वादितिभावः ॥ १८ ॥ तमेवस्पष्टमाह ॥ द्वयोरिति ॥ १९ ॥ ननुकरकादिनिपातेनकृषिफलविघाताद्दैववैपरीत्यमेवदृष्टमित्याशंक्यसोप्यदृ ष्टसाधकएवदृष्टांतइत्याह ॥ मेघेनेति ॥ नीयतेअपनीयतेविनाश्यतइत्यर्थः ॥ मेघस्यमेघाभिमानिपुरुषस्यासौपुरुषार्थोयद्वत्तद्वदन्यत्रापिबोध्यमित्यर्थः ॥ अभ्युपेत्यचेदंवस् तुतत्रापिप्राक्तनंस्वस्यपौरुषमेवादृष्टद्वाराहेतुः ॥ २० ॥ अस्तुवाक्वचित्पौरुषवैफल्यंतथापिनखेदोयुक्तःकिंतुपुनरुद्योगएवयुक्तइत्याह ॥ क्रमेणेत्यादिचतुर्भिः ॥ २१ ॥ २२ ॥ देशेति ॥ तथाचयत्रदेशेकालेवास्ययत्नोविफलोभूत्तद्विहायदेशांतरेकालांतरेक्रियांतरेणद्रव्यांतरेणवायतितव्यमेव ॥ प्रागादिदिक्षुविघ्नितस्यापिविश्वामित्रतपसउत्तरदिशिसि द्धिदर्शनादितिभावः ॥ २३ ॥ २४ ॥ फलंतौफलजननसमर्थौतथाविधौचतौद्रुमौचफलद्रुमौसंजातौपुरुषारण्ये ॥ एकस्यमूलच्छेदेनशोषेपरस्यप्ररोहोभ्रजयः ॥ २५ ॥

उक्तार्थानभ्युपगमेअनिष्टंदर्शयन्नीश्वराधीनतावादंनिराचष्टे ॥ कर्मेत्यादिना ॥योननिहंतिअनीशोऽस्वतंत्रोयंजंतुरीश्वरप्रेरितःसन्स्वर्गनरकमेववा ॥ ईश्वरस्वातंत्र्यनिरासमुपसंहरति ॥क
मित्यर्थः॥२६॥तथाचानिर्मोक्षप्रसंगइत्याह ॥ सइति ॥२७॥ स्वपक्षेतुनायंदोषइत्याह ॥ यस्त्विति ॥ प्रयत्नकौशलमत्रचमत्कारः॥२८॥ ईश्वरस्वातंत्र्यनिरासमुपसंहरति ॥क
श्चिदिति ॥ ननुएषह्येवसाधुकर्मकारयतितंयमेभ्योलोकेभ्यउन्निनीषते यआत्मनितिष्ठन्नात्मानमंतरोयमयति ईश्वरः सर्वभूतानांहृद्देशेर्जुनतिष्ठति इत्यादिश्रुतिस्मृतिविरुद्धंकथ
मीश्वरापलापेनजीवस्वातंत्र्यमुच्यते॥ननुभवतापिकथंयथाकारीयथाचारीतथाभवतिसाधुकारीसाधुर्भवतिपापकारीपापोभवति यजेतजुहुयाद्दद्यात् कर्ताशास्त्रार्थवत्वात् न
कर्तृत्वंनकर्माणिलोकस्यसृजतिप्रभुरित्याद्यनेकश्रुतिसूत्रस्मृत्यनुभवविरुद्धंजीवस्यपारतंत्र्यमुच्यते ॥ नह्यस्वतंत्रोजीवःकर्त्ताभवति ॥स्वतंत्रःकर्त्तेत्यनुशासनविरोधात् ॥ नवाब
लवत्तरेश्वरायत्तोयंविधिशतेननिषेधसहस्रेणवाप्रवर्त्तयितुंनिवर्त्तयितुंवाशक्यते ॥ कथंवाबलादीश्वरेणब्रह्मवधादौप्रवर्त्तितोयमपराधीस्यात् ॥ कथंवाविषमेषुस्वयमेवकांश्चि
त्प्रवर्त्यतान्नरकादिभागिनःकुर्वाणस्येश्वरस्यवैषम्यनैर्घृण्यदोषौनस्याताम्॥कथंवाअंतर्यामिब्राह्मणवाक्यशेषेनान्योतोस्तिद्रष्टानान्योतोस्तिश्रोतानान्योतोस्तिमंतेत्यादिनाजी

कर्मयःप्राक्तनंतुच्छंननिहंतिशुभेहितैः॥ अज्ञोजंतुरनीशोसावात्मनःसुखदुःखयोः॥ २६ ॥ ईश्वरप्रेरितोगच्छेत्स्वर्गनरकमेववा ॥ स
सदैवपराधीनःपशुरेवनसंशयः ॥ २७॥ यस्तूदारचमत्कारःसदाचारविहारवान् ॥ सनिर्यातिजगन्मोहान्मृगेंद्रःपंजरादिव ॥ २८ ॥
कश्चिन्मांप्रेरयत्येवमित्यनर्थकुकल्पने ॥ यःस्थितोऽदृष्टमुत्सृज्यत्याज्योसौदूरतोधमः ॥ २९ ॥ व्यवहारसहस्राणियान्युपायांतियांति
च ॥ यथाशास्त्रंविहर्त्तव्यंतेषुत्यक्त्वासुखासुखे ॥३०॥ यथाशास्त्रमनुच्छिन्नांमर्यादांस्वामनुज्झतः॥ उपतिष्ठंतिसर्वाणिरत्नान्यंबुनिधा
विव ॥३१॥ स्वार्थप्रापककार्यैकप्रयत्नपरताबुधैः॥ प्रोक्तापौरुषशब्देनसासिद्ध्यैशास्त्रयंत्रिता ॥ ३२ ॥

वस्वातंत्र्यसमर्थनंचसंगच्छताम्॥यदितुकेवलाज्ञपुरुषदृष्टिमवलंब्यकर्मकांडप्रवृत्तेर्जीवस्वातंत्र्यवादः तच्छैथिल्यापादनेनसर्वभूतेष्वैकात्म्यव्युत्पादनायप्रवृत्ता
त्रापलापेनेश्वरैकस्वातंत्र्यसमर्थनंचसंगच्छताम्॥यदितुकेवलाज्ञपुरुषदृष्टिमवलंब्यकर्मकांडप्रवृत्तेर्जीवस्वातंत्र्यवादः तच्छैथिल्यापादनेनसर्वभूतेष्वैकात्म्यव्युत्पादनायप्रवृत्तां
त्रापलापेनेश्वरैकस्वातंत्र्यसमर्थनंचसंगच्छताम्॥ नकर्तृत्वंनकर्माणिलोकस्यसृजतिप्रः
विवेकदृष्टिमवलंब्येश्वरैकस्वातंत्र्यवादः तत्फलज्ञानेनलब्धांपूर्वदृष्टिमवलंब्यतदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमयमात्माब्रह्मसर्वानुभूः परमार्थदृशातुनहस्तीनवादारुनबाधा
रित्यादिश्रुतिस्मृतिवादाः यथास्वमदर्पणादौदारुहस्तिधावनस्यहस्तिदृष्ट्यादर्शनेहस्तीधावतिनदारु दारुदृशादर्शनेतुदार्वेवधावतिनहस्ती तथाचभगवत्पादैः
वत्यविकृतंपुरुषदर्पणादिस्वरूपमेवास्तेइतिवादास्तद्वदित्यविरोधंब्रूषेतर्हिमोक्षोपायप्रवर्त्तकवसिष्ठवचनस्याप्यज्ञविषयत्वाद्युक्तएवात्रेश्वरस्वातंत्र्यनिरासः ॥ एवंचाज्ञदृष्ट्
यंभाष्यम् ॥ तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासंपुरस्कृत्यसर्वेप्रमाणप्रमेयव्यवहारालौकिकाःप्रवृत्ताःसर्वाणिचशास्त्राणिविधिनिषेधमोक्षपराणीति ॥ तेषुप्रियाप्रियेरागद्वेषौत्य
सिद्धजीवस्वातंत्र्यपक्षप्राप्तकर्मानुसारेणनियंतुरीश्वरस्यनवैषम्यनैर्घृण्यादिप्रसक्तिरपीतिभावः ॥ २९ ॥ उपायांतिलाभादिफलेन ॥ यांतितद्विघातेन॥तेषुप्रियाप्रियेरागद्वेषौत्य
क्त्वायथाशास्त्रमेवव्यवहर्त्तव्यमित्यर्थः ॥ ३० ॥ सर्वाणिअभीष्टानीतिशेषः ॥ ३१ ॥ पौरुषशब्दार्थमाह ॥ स्वार्थेति ॥ स्वार्थःसुखंदुःखनिवृत्तिश्चतत्प्रापकाणियान्यवश्यकर्त
व्यानिसाधनानितदेकप्रयत्नतत्परतेत्यर्थः॥ सासिद्ध्यैपरमपुरुषार्थाय ॥ ३२ ॥

स्पंदोदेहादिचलनंतद्धर्मिण्यातत्परंपराक्रूपयाशुश्रूषयाश्रवणादिक्रियया साधुसंगमेनसच्छास्त्रैश्चासंभावनादिदोषनिरासेननिशितयास्वयाधियास्वयमात्माउन्नीयतेउद्ध्रियते साचास्यस्वार्थसाधकतेत्यर्थः ॥३३॥ साधुसच्छास्त्रयोर्लक्षणमाह ॥ अनंतमिति ॥ समताअज्ञानकृतवैषम्यनिवृत्तिः ॥३४॥ यल्लोकद्वयहितंपौरुषंभवेत्तद्देवदेवलोकभुक्तशिष्टं देवलोकादिहागत्यस्थितस्यदैवशब्देनकथ्यतइत्यर्थः ॥ ३५ ॥ तदेतद्युक्तमेतस्मिन्नास्तिसदेहइतिशेषः ॥ तन्नापवदामहेननिंदामः ॥ किंतर्हिनियतेतदाह ॥ मूढैरिति ॥ तेक्षयंग ताइत्यपवदामहेइतिशेषः ॥३६॥ ननुप्राग्देवलोकावाप्तिरपिदैवादेवकिंनस्यात्तत्राह ॥ नित्यमिति ॥ प्रसाधितंफलेनोपसंहरति ॥ ह्यस्तनीत्यादिना ॥३७॥ एवंअद्यतन्याप्राक्तनी शोभामभ्येतीतिपूर्वेणान्वयः ॥ नन्वस्तुप्राक्तनजयःपुरुषार्थसिद्धिस्तुकुतस्तत्राह ॥ तस्मादिति ॥ यःकार्यवान्भवेत्तस्यतत्फलंकरामलकवद्दृष्टमित्यन्वयः ॥३८॥ हेशुभाशयत स्मात्कारणान्निजस्यस्वस्यविकल्पोर्थशून्याचित्तवृत्तिस्तद्वशादुपकल्पितमतएवासन्मयम ॥ स्वार्थेमयट् ॥ तत्रहेतुः ॥ सकलैःकारणैःकार्यैःप्रयोजनैश्चविवर्जितमितितथा

क्रिययास्पंदधर्मिण्यास्वार्थसाधकतास्वयम् ॥ साधुसंगमसच्छास्त्रतीक्ष्णयोन्नीयतेधिया ॥३३॥ अनंतंसमतानंदंपरमार्थंविदुर्बुधाः ॥ सयेभ्यःप्राप्यतेनित्यंतेसेव्याःशास्त्रसाधवः ॥३४॥ देवलोकादिहागत्यलोकद्वयहितंभवेत् ॥ प्राक्तनंपौरुषंतद्वैदैवशब्देनकथ्यते ॥३५॥ तद्यु क्तमेतदेतस्मिन्नास्तिनापवदामहे ॥ मूढैःप्रकल्पितंदैवंमन्यंतेयेक्षयंगताः ॥३६॥ नित्यंस्वपौरुषादेवलोकद्वयहितंभवेत् ॥ ह्यस्तनीदुष्क्रि याभ्येतिशोभांसत्क्रिययायथा ॥३७॥ अद्यैवंप्राक्तनीतस्माद्यत्नाद्यःकार्यवान्भवेत् ॥ करामलकवद्दृष्टंपौरुषादेवतत्फलम् ॥ मूढःप्रत्यक्ष मुत्सृज्यदैवमोहेनिमज्जति ॥३८॥ सकलकारणकार्य्यविवर्जितंनिजविकल्पबलादुपकल्पितम् ॥ तदनपेक्ष्यहिदैवमसन्मयंश्रयशुभा शयपौरुषमात्मनः ॥ ३९ ॥ शास्त्रैःसदाचरविजृंभितदेशधर्मैर्यत्कल्पितंफलमतीवचिरप्ररूढम् ॥ तस्मिन्हृदिस्फुरतिचोपनमेतिचित्त मंगावलीतदनुपौरुषमेतदाहुः ॥४०॥ बुद्ध्वैवपौरुषफलंपुरुषत्वमेतदात्मप्रयत्नपरतैवसदैवकार्या ॥ नेयाततःसफलतांपरमामथासौ सच्छास्त्रसाधुजनपंडितसेवनेन ॥ ४१ ॥ दैवपौरुषविचारचारुभिश्चेदमाचरितमात्मपौरुषम् ॥ नित्यमेवजयतीतिभावितैःकार्यआ र्यजनसेवयोद्यमः ॥ ४२ ॥

विधंदैवमनपेक्ष्यपौरुषंश्रयस्वीकुरु ॥ ३९ ॥ किंतत्पौरुषंयच्छ्रयेत्युच्यतेतदाह ॥ शास्त्रैरिति ॥ वेदस्मृत्यादिभिःशास्त्रैःसतामाच रणंसदाचरः ॥ घञर्थेकविधानमितिकः ॥ तेनविजृंभिताविस्तीर्णायेदेशधर्मास्तत्तद्देशनियताचारास्तैश्चयच्चित्तशुद्धिलक्षणंज्ञानलक्षणंचफलंकल्पितंसमर्थितमतीवचिरंप्ररूढं प्रसिद्धंचतस्मिन्हृदिवृद्धौस्फुरति ॥ अभिलषितेसतितत्साधनाचरणेच्छयाचित्तंचोपनंस्पंदम् ॥ टुपमंदायांगतौल्युट् ॥ एतिप्राप्नोतितदनुसारेणअंगावलीइंद्रियहस्तपादादिश्चो पनमेतिश्रवणादिनाव्यवहरतिएतदेवपौरुषमित्याहुःशिष्टाइत्यर्थः ॥ ४० ॥ एतत्पुरुषत्वमधिकारिपुंजन्मपौरुषफलपुरुषार्थसिद्धावेवसफलंनान्यथेतिबुद्ध्वासदैवआत्मप्रयत्नप रतैवकार्या ॥ अथासौप्रयत्नपरतासच्छास्त्राणांसाधुजनानांसेवनेनतदनुगतविचारेणात्मज्ञानफललाभेनसफलतांनेयाप्रापणीया ॥ नयतेर्द्विकर्मणःप्रधानेनीह्कृष्वहामितिप्र धानकर्मणएवकृत्येनाभिधानादप्रधानेकर्म्मणिद्वितीया ॥ ४१ ॥ इदमात्मपौरुषंनित्यमाचरितंसद्दैवंजयत्येवेतिदैवपौरुषयोर्बलाबलविचारेणचारुभिश्चकारात्च्छमदमादिमद्भि रधिकारिभिरार्यजनसेवयानित्यभावितैःश्रवणादिभिरुद्यमःकार्यस्तत्त्वज्ञानायेत्यर्थः ॥ ४२ ॥

एपजीवऐहिकमिहास्मिन्नधिकारिजन्मनिसंपाद्यमानंसहजंशास्त्रबोधितत्वात्सत्यंफलाविसंवादीतियावत् ॥ तथाविधपौरुषमेवासिद्ध्यै [illegible] ॥ अधीष्टे
टानांपराणांसर्वोत्कृष्टानांपंडितानांब्रह्मविदांसेवनेनसेवालक्षणेनावितथेनामोघेनमृष्टेनमधुरतरेणवरौषधेनजन्मप्रबंधोजन्मपरंपरातन्मयंतत्प्रचुरमामयंशांतिनयतु ॥ ६ ॥ ॥ ७ ॥
लोट् ॥ अतिसुलभोपायेसतिकिमर्थमवसीदतीत्यर्थः ॥ ४३ ॥ ॥ इतिश्रीवासिष्ठमहारा० तात्पर्यप्रकाशेमुमुक्षुव्यवहारप्रकरणेदैवनिराकरणंनामषष्ठःसर्गः ॥ ६ ॥ ॥ ७ ॥
पौरुषैकप्रधानत्वमुदाहरणविस्तरैः ॥ प्रत्युदाहरणैश्चात्रयुक्तिभिश्चसमर्थ्यते ॥ १ ॥ कृतमत्रदैवनिरासेनपौरुषप्राधान्यसमर्थनमुदाहरणप्रत्युदाहरणैर्दृढीकरिष्यन्नधिकारिणोहि
तोपदेशोपपत्तिभिःपुरुषार्थेअवतारयति ॥ प्राप्येति ॥ अल्पाआधिवेदनामानसदुःखभोगायस्मिन् ॥ समादध्याच्चित्तसमाधानायप्रयतेत ॥ १ ॥ अनिच्छतःकथंयत्नःस्यादि
तितत्रेच्छावश्यकत्वमाह ॥ दैवमिति ॥ संपूर्णाभिवांछितोभवतीतिशेषः ॥ २ ॥ अन्वयमुखेनोक्तमर्थंव्यतिरेकमुखेनापिसमर्थयति ॥ येइति ॥ आत्मविद्विषःस्वात्मशत्रवः

जन्मप्रबंधमयमामयमेषजीवोभुक्त्वैहिकंसहजपौरुषमेवसिद्ध्यै ॥ शांतिनयत्ववितथेनवरौपधेनमृष्टेनतुष्टपरपंडितसेवनेन ॥ ४३ ॥
इतिश्रीवासि० वा० दे० मो० मुमुक्षुव्यवहारप्रकरणेदैवनिराकरणंनामषष्ठःसर्गः ॥ ६ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ प्राप्यव्याधिविनि
मुक्तंदेहमल्पाधिवेदनम् ॥ तथात्मनिसमादध्याद्यथाभूयोनजायते ॥ १ ॥ दैवंपुरुषकारेणयोनिवर्त्तितुमिच्छति ॥ इहवामुत्रजगतिसस
पूर्णाभिवांछितः ॥ २ ॥ येसमुद्योगमुत्सृज्यास्थितादैवपरायणाः ॥ तेधर्ममर्थंकामंचनाशयंत्यात्मविद्विषः ॥ ३ ॥ संवित्स्पंदोमनःस्पंदऐं
द्रियस्पंदएवच ॥ एतानिपुरुषार्थस्यरूपाण्येभ्यःफलोदयः ॥ ४ ॥ यथासंवेदनंचेतस्तथातत्स्पंदमृच्छति ॥ तथैवकायश्चलतितथैवफल
भोक्तृता ॥ ५ ॥ आबालमेतत्संसिद्धंयत्रयत्रयथायथा ॥ दैवंतुनक्वचिद्दृष्टमतोजगतिपौरुषम् ॥ ६ ॥ पुरुषार्थेनदेवानांगुरुरेवबृहस्पतिः ॥
शुक्रोदैत्येंद्रगुरुतांपुरुषार्थेनचास्थितः ॥ ७ ॥ दैन्यदारिद्र्यदुःखार्त्ताअपिसाधोनरोत्तमाः ॥ पौरुषेणैवयत्नेनयातादेवेंद्रतुल्यताम् ॥ ८ ॥

॥ ३ ॥ प्रत्यक्षपौरुषविरुद्धंदैवंप्रत्याचिख्यासुःपौरुषस्यप्रत्यक्षसिद्धंस्वरूपमाह ॥ संवित्स्पंदइत्यादिना ॥ संवित्स्पंदःपुरुषार्थतत्साधनस्फूर्त्तिस्तेनतत्साधनेच्छायत्नोमनःस्पंदस्ते
नकर्मेंद्रियाणामंगचालनायप्रवृत्तिरैंद्रियस्पंदः ॥ एवकारचकाराभ्यांतत्प्रयुक्तकायबाह्योपकरणस्पंदोपिसंगृह्यते ॥ एतानिपुरुषार्थस्यपौरुषस्यरूपाणिक्रमिकविभेदाः ॥ एते
भ्योनिरंतरवृत्तेभ्यःफलोदयोऽभिलषितार्थसिद्धिःप्रसिद्धेत्यर्थः ॥ ४ ॥ उक्तमर्थंविवृणोति ॥ यथेति ॥ यथासंवेदनंसाक्षिणियादृशीविषयस्फूर्त्तिःपूर्वंभवतिततोमनस्तादृशंस्पं
दमृच्छतिगच्छति ॥ तथैवकर्मेंद्रियस्पंदेनकायश्चलति ॥ क्रियानुसारिणीचफलसिद्धिरित्यर्थः ॥ ५ ॥ यत्रयत्रफलेलौकिकेवैदिकेवायथायथापौरुषमुपयुज्यते ध्यानादौमान
समेवंप्रधानमासनमौनेतदंगे स्तवनादौवाचिकमेवप्रधानमैकाग्र्यसांमुख्येतदंगे यात्रादौतुकायिकमेवप्रधानंवाङ्मनोनियमौतदंगे क्वचित्तुद्वयोर्द्वयोःप्राधान्यंक्वचित्त्रयाणामिति
तत्रतत्रतथातथातत्पौरुषमाबालंबालानभिव्याप्यसंसिद्धंप्रत्यक्षसिद्धंदैवंतुनक्वचिद्दृष्टमित्यसदेवेत्यर्थः ॥ ६ ॥ उक्तमर्थमुदाहरणैःस्फुटयति ॥ पुरुषार्थेनेत्यादिचतुर्भिः ॥ ७ ॥ ८ ॥

नानाविधानामाश्चर्यरूपाणांविभवानांसमाश्रयानह्रुपादयः ॥ ९ ॥ भावाविभवाअभावाविपदस्तेपांसहस्रेषु ॥ निवृत्ताअतिक्रांताः ॥ १० ॥ लौकिकाःस्वतएवयागादयः स्वतःशास्त्रतश्चज्ञानंतुस्वत.शास्त्रतोगुरुतश्चेतित्रिसिद्धयः ॥ ( ननुदैवोसिद्धोयमहा ) निर्व्यापारंदैवदुर्पहवादिनांमतावलंबनेसर्वविधीनामुच्छेदप्रसंगः ॥ सोमेनयजेतेत्यादिवा क्यवोधितयागानांव्यापारजन्यत्वाद्भावनानांचपुरुषप्रवृत्तिनिमित्तत्वात्प्रवृत्तेश्चपरिस्पंदरूपत्वात् ॥ ११ ॥ तेपुप्रस्तुतोपयोगिसारंदर्शयति ॥ अशुभेष्विति ॥ १२ ॥ श्रेयःसर्वो त्कृष्टम् ॥ अतुच्छंपरमार्थसत्यम् ॥ अपायविवर्जितंनित्यम् ॥ फलतोयद्यदीदृशतत्तदाचर ॥ १३ ॥ आशुशीघ्रभवतीतिशेषः ॥ इतिनिश्चित्य ॥ १४ ॥ क्रमआचरणम् ॥ दुः

महांतोविभवास्वादैर्नानाश्चर्यसमाश्रयाः॥ पौरुषेणैवदोषेणनरकातिथितांगताः॥ ९ ॥ भावाभावसहस्रेषुदशासुविविधासुच॥ स्व पौरुषवशादेवनिवृत्ताभूतजातयः॥ १० ॥ शास्त्रतोगुरुतश्चैवस्वतश्चेतित्रिसिद्धयः॥ सर्वत्रपुरुषार्थस्यनदैवस्यकदाचन॥ ११ ॥ अशु भेषुसमाविष्टंशुभेष्वेवावतारयेत्॥ प्रयत्नाच्चित्तमित्येषसर्वशास्त्रार्थसंग्रहः॥ १२॥ यच्छ्रेयोयदतुच्छंचयदपायविवर्जितम् ॥ तत्तदाच रयत्नेनपुत्रेतिगुरवःस्थिताः॥ १३॥ यथायथाप्रयत्नोमेफलमाशुतथातथा॥ इत्यहंपौरुषादेवफलभाङ्नतुदैवतः॥ १४॥ पौरुषाद्दृश्यते सिद्धिःपौरुषाद्धीमतांक्रमः॥ दैवमाश्वासनामात्रंदुःखेपेलवबुद्धिषु॥ १५॥ प्रत्यक्षप्रमुखैर्नित्यंप्रमाणैःपौरुषक्रमः॥ फलितोदृश्यतेलो केदेशांतरगमादिकः॥ १६ ॥ भोक्तातृप्यतिनाभोक्तागंतागच्छतिनागतिः ॥ वक्तावक्तिनचावक्तापौरुषंसफलंनृणाम्॥ १७॥ पौरुषे णदुरंतेभ्यःसंकटेभ्यःसुबुद्धयः॥ समुत्तरंत्ययत्नेननतुमोघतयानया ॥ १८ ॥ योयोयथाप्रयततेससतत्तत्फलैकभाक्॥ ननुतूष्णींस्थि तेनेहकेनचित्प्राप्यतेफलम्॥ १९॥ शुभेनपुरुषार्थेनशुभमासाद्यतेफलम्॥ अशुभेनाशुभंरामयथेच्छसितथाकुरु॥ २०॥ पुरुषार्थात्फ लप्राप्तिर्देशकालवशादिह॥ प्राप्ताचिरेणशीघ्रंवायासौदैवमितिस्मृता॥ २१॥ नदैवंदृश्यतेदृष्ट्यानचलोकांतरेस्थितम्॥ उक्तंदैवाभिधा नेनस्वर्लौकिककर्मणःफलम्॥ २२॥ पुरुषोजायतेलोकेवर्द्धतेजीर्यतेपुनः॥ नतत्रदृश्यतेदैवंजरायौवनबाल्यवत्॥ २३॥

खेरुदत्सुपेलवबुद्धिष्वल्पबुद्धिषुआश्वासनामात्रमश्रुमार्जनतुल्यम् ॥ १५ ॥ देशांतरेगमनंगमः ॥ १६ ॥ इतिसफलंदृष्टमितिशेषः ॥ १७॥ मोघतयानिर्व्यापाररूपया ॥ अन यादैवदृष्ट्या ॥ १८ ॥ एकभाक्नियतंभाजनम् ॥ १९॥ २० ॥ यदिदैवेमहतीभक्तिस्तर्हिपौरुषमेवदैवबुद्ध्यावलंब्यतांनत्वसत्कल्पमन्यदित्यभिप्रेत्याह॥ पुरुषार्थादित्यादिना॥ फलप्राप्ति फलसंपत् ॥ २१ ॥ ननुस्वर्गादिलोकस्थदैवमिहादर्शनेननापलपितुंशक्यंतत्राह ॥ नेति ॥ स्वर्लौकेस्वर्गलोके ॥ २२ ॥ तत्रपुरुषे ॥ २३ ॥

१ एतावंत्यक्षराणिपुस्तकद्वयेदृष्टानीतितथैवस्थापितानि ॥ ( ननुदैवस्यत्रिसिद्धय॰ ) इतिचेद्वरमितिभाति ॥

सदसत्पौरुषयोर्विभागमाह ॥ अर्थैत्यादिना ॥ २४ ॥ देशांतरप्राप्तिःपादयोःपौरुषेण ॥ अन्योन्यापारश्चांगांतराणांपौरुषेणैवनदैवतोदृष्टइत्यर्थः ॥ २५ ॥ अनर्थस्यप्राप्तय
स्मादितिव्यधिकरणपदबहुव्रीहिः ॥ कर्मणिक्तिनिसमानाधिकरणपदोवा ॥ नकिंचिच्छुभमितिशेषः ॥ अशुभंतुप्राप्यतएव ॥ २६ ॥ अधिकविवक्षयोक्तमेवपुनराह ॥ क्रिय
येत्यादिना ॥ क्रिययेतितृतीयांतपाठःप्राग्व्याख्यातः ॥ क्वचित्तुक्रियायाःस्पंदधर्मिण्याइतिपाठस्तत्रक्रियायाःस्वार्थसाधकताप्रसिद्धेतितत्फलभूतयाधियास्वयमुन्नीयतेउद्दिश्य
यतइत्यर्थः ॥ २७ ॥ समताअज्ञानकृतवैषम्यनिवृत्तिस्तदुपलक्षितमानंदंयेविदुःसचानंदोयेभ्यःप्राप्यतेतेसेव्याःप्रणिपातपरिप्रश्नशुश्रूषादिभिरभ्यासेनचावर्जनीयाः ॥ २८ ॥

अर्थप्रापककार्यैकप्रयत्नपरताबुधैः॥ प्रोक्तापौरुषशब्देनसर्वमासाद्यतेनया॥ २४॥ देशाद्देशांतरप्राप्तिर्हस्तस्यद्रव्यधारणम्॥ व्यापा
रश्चतथांगानांपौरुषेणनदैवतः॥ २५॥ अनर्थप्राप्तिकार्यैकप्रयत्नपरतातुया॥ प्रोक्ताप्रोन्मत्तचेष्टेतिनकिंचित्साप्यतेनया॥ २६ ॥ क्रि
ययास्पंदधर्मिण्यास्वार्थसाधकतास्वयम्॥ साधुसंगमसच्छास्त्रतीक्ष्णयोन्नीयतेधिया ॥ २७॥ अनंतसमतानंदंपरमार्थस्वकंविदुः॥
सयेभ्यःप्राप्यतेयत्नात्सेव्यास्तेशास्त्रसाधवः॥२८॥ सच्छास्त्रादिगुणोमत्यासच्छास्त्रादिगुणान्मतिः॥ विवर्धेतेमिथोभ्यासात्सरोब्जावि
वकालतः॥२९॥ आबाल्यादलमभ्यस्तैःशास्त्रसत्संगमादिभिः॥ गुणैःपुरुषयत्नेनस्वार्थःसंपद्यतेहितः॥ ३०॥ पौरुषेणजितादैत्याःस्था
पिताभुवनक्रियाः॥ रचितानिजगंतीहविष्णुनानचदैवतः॥ ३१ ॥ जगतिपुरुषकारकारणेस्मिन्कुरुरघुनाथचिरंतथाप्रयत्नम्॥ व्रज
सितरुसरीसृपाभिधानांसुभगयथानदशामशंकएव॥३२॥ ॥इतिश्रीवासिष्ठमहारामायणेवा०दे०मो०मुमुक्षुव्यवहारप्रकरणेपौ
रुषप्राधान्यसमर्थनंनामसप्तमःसर्गः॥७॥ ॥७॥

यद्विवक्षयोक्तमपिपुनरुक्तंतदाह ॥ सच्छास्त्रेति ॥ आदिपदात्साधुसंगमपरिग्रहः ॥ तत्रसाधुसंगमाभ्यासस्यगुणस्तत्समशीलताप्राप्तिः ॥ शास्त्राभ्यासस्यगुणःशास्त्रतात्पर्यज्ञा॥
मतिस्तत्त्वबोधः ॥ यथायथायंगुरुशुश्रूषाशास्त्राभ्यासपरोभवतितथातथास्यबोधोविवर्द्धते ॥ यथायथाचबोधाभिवृद्धिस्तथातथागुरुशास्त्रविश्वासवृद्धिस्तद्गुणवृद्ध्यासुख॥
वृद्ध्योत्तरोत्तरभूमिकामारोहति ॥ कालतश्चिरकालतोवर्षाकालतश्च ॥ २९ ॥ तथाचतद्विवृद्धयेचिरंयत्नःकार्यइतिवक्तुमुक्तमेवपुनराह ॥ आबाल्यादिति ॥ ३० ॥ ३१ ॥
पुरुषकारःपौरुषंतदेवपुरुषार्थकारणंयस्मिंस्तथाविधेजगति ॥ रघुनाथेत्यधिकृतकुलश्रेष्ठत्वद्योतनायसंबोधनम् ॥ सरीसृपःसर्पः ॥ ३२ ॥ ॥ इतिश्रीवासिष्ठमहारा०तात्पर्य
प्रकाशेमुमुक्षुव्यवहारप्रकरणेसप्तमःसर्गः ॥ ७ ॥ ॥७॥ ॥७॥

वर्णितंदैवमिथ्यात्वमुदाहरणविस्तरैः ॥ उपजीव्यविरोधादियुक्तिभिश्चसमर्थ्यते ॥ १ ॥ इत्थंदैवंनिरस्यपौरुषस्वातंत्र्यसमर्थितेप्यनाश्वासेनमोमुक्षमाणंप्राग्वैराग्यप्रकरणेपंच विशेसर्गे अत्रैवदुर्विलासानांचूडामणिरिहापरः ॥ करोत्यर्त्तातिलोकंस्मिन्दैवंकालश्चकथ्यते ॥ तेनेयमखिलाभूतसंततिःपरिपेलवा ॥ तापेनहिममालेवनीताविधुरतांभृशम् ॥ नृत्यतोहिकृतांतस्यनितांतमिवरागिणः ॥ नित्यंनियतिकांतायांमुनेपरमकामितेत्यादिनास्वेनविस्तरेणोपवर्णितंबहुतरश्रुतिस्मृतिपुराणेतिहासेषुपरमस्वतंत्रतयाप्रसिद्धंदैवंदुरपह्नवमि तिमन्यमानंश्रीरामंलिंगैरुपलक्ष्ययावदस्यदैवस्वातंत्र्येउपजीव्यविरोधोनप्रदर्शितस्तावन्नविश्वसिष्यतीतितंदिदर्शयिषुःश्रीवसिष्ठउवाच ॥ नाकृतिरित्यादिना ॥ आकृतिर्जाति रनुगतसंस्थानंच ॥ कर्मस्पंदपराक्रमाणांमानसशारीरफलोपधानैःसामान्यविशेषतद्विशेषभावेनवाभेदः ॥ यस्यैनेनसंतितद्दैवंकिंस्वरूपमितिनतत्त्वतोनिर्णीयजनैरुच्यते ॥ यतो दुर्वचंतत्तस्मान्मिथ्याज्ञानवदेवरूढमित्यर्थः ॥ मिथोऽज्ञानवदितिपाठेपिअज्ञानंभ्रांतिज्ञानंतद्वदेवमिथोन्योन्यंव्यवहारेरूढमित्यर्थः ॥ १ ॥ किमधिष्ठानाभ्रांतिरितिचेत्तद्दर्शयन्

श्रीवसिष्ठउवाच ॥ ॥नाकृतिर्नचकर्माणिनस्पंदोनपराक्रमः ॥ तन्मिथ्याज्ञानवद्रूढंदैवंनामकिमुच्यते ॥ १ ॥ स्वकर्मफलसंप्राप्ताविद मित्थमितीतिया: ॥ गिरस्तादैवनाम्नैताःप्रसिद्धिंसमुपागताः ॥२॥ तन्नैवमूढमतिभिर्दैवमस्तीतिनिश्चयः ॥ आत्तादुरवबोधेनरज्ज्वामि वभुजंगमः ॥३॥ ध्वस्तनीदुक्क्रियाभ्येतिशोभांसक्रिययायथा ॥ अद्यैवंप्राक्तनीतस्माद्यत्नात्सत्कार्यवान्भवेत् ॥४॥ मूढानुमानसंसिद्धं दैवंयस्यास्तिदुर्मतेः ॥ दैवाद्दाहोस्तिनैवेतिगंतव्यंतनपावके ॥५॥ दैवमेवेहचेत्कर्तृपुंसःकिमिवचेष्टया ॥ स्नानदानासनोच्चारान्दैवमेव करिष्यति ॥६॥ किंवाशास्त्रोपदेशेनमूकोयंपुरुषःकिल ॥ संचार्यतेतुदैवेनकिंकस्येहोपदिश्यते ॥ ७॥ नचनिस्पंदतालोकेदृष्टेहशवतांवि ना ॥ स्पंदाच्चफलसंप्राप्तिस्तस्माद्दैवंनिरर्थकम् ॥८॥नचामूर्तेनदैवेनमूर्त्तस्यसहकर्त्तृता ॥ पुंसःसंदृश्यतेकाचित्तस्माद्दैवंनिरर्थकम् ॥९॥

मिथोव्यवहारंस्फुटयति ॥ स्वकर्मेति ॥ इदंकर्मइत्थमनेनक्रमेणानुष्ठितमितिएवंरूपफलसंपन्नमितियागिरोवाग्व्यवहारास्ताःलक्षणयातद्विषयाइत्यर्थः ॥ २ ॥ तत्रतेषु ॥ दुरव बोधेनभ्रांत्या ॥ आत्तोगृहीतः ॥३॥ तथाचमदुक्तमेवफलितमित्याह ॥ ध्वस्तनीति ॥४॥ उपजीव्यप्रमाणविरोधंविवक्षुःप्रथमंप्रत्यक्षस्वक्रियाविरोधमाह ॥ मूढेति ॥ दाहोनै वास्तीतिदैवाग्निश्चित्यगंतव्यमित्यन्वयः ॥ ५ ॥ उच्चारान्दानाद्यंगमंत्राद्युच्चारणानि ॥ ६ ॥ तथाचवेदादिप्रामाण्यविरोधइत्याह ॥ किमिति ॥ मूकोवाग्व्यापारेप्यस्वतंत्रः ॥ ७ ॥ दृष्टविरोधोपीत्याह ॥ नचेति ॥ ८ ॥ ननुदेहादिस्पंदःकश्चैतरसमुच्चयकर्तृक क्रियात्वात्शिबिकोद्वहनवदित्यनुमानेमूर्त्तकर्त्रंतरस्यप्रत्यक्षबाधेअमूर्त्तःसहकारिकर्त्तासे त्स्यतितदेवदैवंनःसिद्धमित्याशंक्याह ॥ नचेति ॥ तथाचमूर्त्तसमुच्चितकर्तृकत्वंदृश्यसमुच्चितकर्तृकत्वंचोपाधिरित्यर्थः ॥तथाचपक्षेउपाध्यभावाभावेनसाध्याभावःसिद्धइत्या ह ॥ तस्मादिति ॥ ९ ॥

कचिल्लेखनवपनादौमिथःपरस्परंलेखनीक्षुराद्यंगानिसमासाद्यप्राप्तयोर्द्वयोर्मध्येद्वितीयस्यप्रत्याख्यानमेकैकस्यकर्तृताचसदृश्यतइत्यनुषज्यते ॥
इत्यर्द्धंपुनःपठ्यते ॥ एतेनहस्तपादमनोबुद्ध्यादित्रक्रियोपकरणत्वेनापिदैवकल्पनाशानिरस्तेत्याह ॥ हस्तादीनामिति ॥ तत्रहस्तादौसतितेनदैवस्यान्यथासिद्धेःकरणत्वाऽयोगा
द्वातरोगादिनाहतत्वेननष्टत्वेसतीत्युक्तम् ॥ हइतिकिलार्थे ॥ १० ॥ ११ ॥ किंचदैवसिद्धौकर्त्रादिकारकबुद्धिरेववानंतत्पृथग्भूतबुद्धिर्वा ॥ द्वितीयेक्रियायामनुपयुक्तोन्यएवदै
वमितिनिरर्थकोऽर्थःकल्पितःस्यात् ॥ आद्येप्रसिद्धकर्त्रादिरेवदैवशब्देनोक्तःस्यादित्याह ॥ पृथगिति ॥ ननुसमानपांडित्यादिफलमीहमानानामधीयानानांकेचिदेवतत्फलेनयु
ज्यंतेनसर्वेतत्रावश्यंवैषम्येनिमित्तंकल्प्यं कार्यवैषम्यलिंगस्यकल्पनाप्रमाणत्वादितिचेत्तत्राह ॥ कल्पनायामिति ॥ तत्रापिदृष्टसजातीयपौरुषमेवप्राक्तनंकल्प्यतेनाप्रसिद्धंदैव

**मिथोंगानिसमासाद्यद्वयोरेकैककर्त्तृता ॥ हस्तादीनांहतत्वेहनदैवेनक्वचित्कृतम् ॥ १० ॥ मनोबुद्धिवदप्येतद्दैवंनेहानुभूयते ॥ आगोपा**
**लंकृतप्रज्ञैस्तेनदैवमसत्सदा ॥ ११ ॥ पृथक्चेद्बुद्धिरन्योर्थःसैवचेत्कान्यतातयोः ॥ कल्पनायांप्रमाणंचेत्पौरुषंकिंनकल्प्यते ॥ १२ ॥ नामू**
**र्त्तैस्तेनसंगोऽस्तिनभसेववपुष्मतः ॥ मूर्त्तंचदृश्यतेलग्नंतस्माद्दैवंनविद्यते ॥ १३ ॥ विनियोक्त्रथभूतानामस्त्यन्यच्चेज्जगत्त्रये ॥ शेरतेभू**
**तवृंदानिदैवंसर्वंकरिष्यति ॥ १४ ॥ दैवेनत्वभियुक्तोहंतत्करोमीदृशंस्थितम् ॥ समाश्वासनवागेषानदैवंपरमार्थतः ॥ १५ ॥ मूढैःप्रक**
**ल्पितंदैवंतत्परास्तेक्षयंगताः ॥ प्राज्ञास्तुपौरुषार्थेनपदमुत्तमतांगताः ॥ १६ ॥ येशूरायेचविक्रांतायेप्राज्ञायेचपंडिताः ॥ तैस्तैःकिमिव**
**लोकेस्मिन्वददैवंप्रतीक्ष्यते ॥ १७ ॥ कालविद्भिर्विनिर्णीतायस्यातिचिरजीविता ॥ सचेज्जीवतिसंछिन्नशिरास्तद्दैवमुत्तमम् ॥ १८ ॥**
**कालविद्भिर्विनिर्णीतंपांडित्यंयस्यराघव ॥ अनध्यापितएवासौतज्ज्ञश्चेद्दैवमुत्तमम् ॥ १९ ॥ विश्वामित्रेणमुनिनादैवमुत्सृज्यदूरतः ॥**
**पौरुषेणैवसंप्राप्तंब्राह्मण्यंरामनान्यथा ॥ २० ॥ अस्माभिरपरैरामपुरुषैर्मुनितांगतैः ॥ पौरुषेणैवसंप्राप्ताचिरंगगनगामिता ॥ २१ ॥ उ**
**त्साद्यदेवसंघातंचक्रुस्त्रिभुवनोदरे ॥ पौरुषेणैवयत्नेनसाम्राज्यंदानवेश्वराः ॥ २२ ॥**

मित्यर्थः ॥ १२ ॥ कारकांतरसहकारित्वायोग्यत्वादपिनतत्कल्पनायुक्तेत्याह ॥ नेति ॥ तेनकारकांतरेण ॥ संगःसंयोगः ॥ वपुष्मतोस्मदादेः ॥ चकारोवधारणे ॥ यस्मान्मू
र्त्तमेवलग्नंपरस्परसंयुक्तंदृश्यतेतस्मात् ॥ १३ ॥ शेरतेशयीरन् ॥ व्यत्ययेनलिङर्थेलट् ॥ १४ ॥ अभियुक्तःप्रेरितः ॥ स्थितंदैवसंकल्पसिद्धम् ॥ १५ ॥ १६ ॥ किमितिकाकुः
प्रश्नच्छलेनाक्षेपे ॥ १७ ॥ ननुदैवज्ञाग्रहान्निवेदयंतितद्दैवमित्याशंक्यतेषांलिंगविधयाचारभेदेनपौरुषतत्फलसूचकत्वमेवनकारणतेत्यभिप्रेत्याह ॥ कालविद्भिरिति ॥ १८ ॥
उत्तमंश्रेष्ठंकारणंसिद्ध्येदितिशेषः ॥ १९ ॥ विश्वासदार्ढ्यायपुरोगतेष्वेवपौरुषफलमुदाहरति ॥ विश्वामित्रेणेति ॥ २० ॥ २१ ॥ यत्तुप्रसिद्धमिंद्रादिदैवंतदपिपौरुषेणपराजि
तंप्रसिद्धमित्याह ॥ उत्साद्येति ॥ २२ ॥

योपितस्यजयःसोपिपौरुषादेवनस्वतइत्याह ॥ आलूनेति ॥ आभोगिविस्तीर्णजगत् आलूनंछिन्नंशीर्णंजर्जरीकृतंचशत्रुसैन्यंयस्मिन्युद्धादिकर्मणितद्यथास्यात्तथाआजक्रुः न्त्याजक्रुः ॥ तथाचदैवस्यापिदैवंपौरुषमेवेतिभावः ॥ २३ ॥ अनयारालमधूच्छिष्टादिलेपनादिरूपेणप्रसिद्धयापौरुषयुक्त्या ॥ करंडकेवंशसंपुटके ॥ २४ ॥ भरणंस्वजनपोषणम ॥ आदानंबलात्पराराष्ट्रादेः ॥ संरंभःक्रोधेनपरनिग्रहः ॥ विभ्रमाभोगविलासाः ॥ अन्येपियेश्रमभूमयःकष्टसाध्याःपुरुषार्थास्तेपुदैवस्यशक्ततानदृश्यते॥ ओषधिपदंमणिमंत्राद्युपलक्षणंतस्येव ॥ २५ ॥ हेशुभाशयत्वंनिजःस्वीयोविकल्पोभ्रमस्तस्मादुपकल्पितमिवासन्मयंतुच्छप्रायंदैवमनपेक्ष्यपौरुषंश्रयआश्रय ॥ २६ ॥ ॥ इतिवासिष्ठमहारामा०तात्पर्यप्रकाशेमुमुक्षुव्यवहारप्रकरणेअष्टमःसर्गः ॥ ८ ॥ ॥ ९ ॥ ॥ दैवापलापसिद्ध्यर्थंमनोमात्रत्वमुच्यते ॥ कर्मणःसफलस्यात्रमनसश्चचिदात्मता ॥ १ ॥ पूर्वपौरुषस्वातंत्र्यसिद्ध्येकचिद्दैवमसदेवनास्त्येवेत्यपलपितम् क्वचित्तुप्राक्तनप्रयत्नजन्यकर्मैवदैवंपौरुषमेववादैवमित्युक्तं तत्रप्रथमकल्पेदृढतरलोकवेदप्रसिद्धेर्निरालंबनत्वापत्तिमसतिदुर्बलेतत्सापेक्षपौरुषप्राबल्योक्तिविरोधंच द्वितीयेतुअसद्दैवमितिप्रतिज्ञानुपपत्तिमाधुनिकप्रवृत्तीनामपिपूर्वकर्मफलतयातदनुगुणतयैवोत्पत्तौतद्विरोधित्वाभावेनताभिस्तज्जयोक्तिविरोधंतत्पारतंत्र्येपिपुरुषस्वातंत्र्यविघातंचाक्षेप्स्यामीतिगूढाभिसंधिःश्रीरामस्तदर्थंगुरोःकतरस्मिन्कल्पेनिर्भरइतिजिज्ञासुरुवाच ॥ भगवन्निति ॥ प्रतिष्ठांप्रसिद्धिमलमत्यंतमागतंप्राप्तंयद्दैवंतत्किमसद्वुतसदेवेत्यर्थः ॥१॥ एवंपृष्टोज्ञातरामाभिप्रायःश्रीवसिष्ठोपिदैवापलापोपपत्त्यैवजगदपलापेनाद्वितीयमात्मतत्त्वंबुबोधयिषुःकल्पयोःफलतोनास्तिभेदइतिगूढाभिप्राय प्रथमकल्पमेवावलंब्योक्तमेवोवाच ॥ पौरुषमिति ॥ वस्तुतउदासीनत्वादात्मनोनकर्तृत्वंनवाभोक्तृत्वमितिद्योतनायकरणेपिपौरुषेणत्कर्तृताव्यपदेशः ॥ २ ॥ विवेकिभिर्नाद्रियते ॥ कल्पनानिरूढप्राति ह्लोकानामित्यर्थः ॥ ३ ॥ निरालंबनत्वानुपपत्तिपरिहरति ॥ सिद्धस्येति ॥ फलशालिनाअवश्यफलवतापौरुषेण सिद्धम्यवनितापिशाचैर्भर्तृसपत्न्यादिभि शुभाशुभंयत्प्राप्यतेतदेवास्मद्दैवमितिव्यवह्रियतइत्यर्थः ॥ ४ ॥

आलूनशीर्णमाभोगिजगदाजक्रुरोजसा ॥ पौरुषेणैवयत्नेनदानवेभ्यःसुरेश्वराः ॥ २३ ॥ रामपौरुषयुक्त्याचसलिलंधार्य्यतेनया ॥ चिरंकरंडकेचारुनदैवंतत्रकारणम् ॥ २४ ॥ भरणादानसंरंभविभ्रमश्रमभूमिषु ॥ शक्तताहृश्यतेरामनदैवस्यौषधेरिव ॥ २५ ॥ सकलकारणकार्यविवर्जितंनिजविकल्पवशादुपकल्पितम् ॥ त्वमनपेक्ष्यहिदैवमसन्मयंश्रयशुभाशयपौरुषमुत्तमम् ॥ २६ ॥ ॥ इति श्रीवासिष्ठमहारामायणेवा०दे०मो०मुमुक्षुव्य०दैवनिराकरणंनाम अष्टमःसर्गः ॥ ८ ॥ ॥ ९ ॥ ॥ श्रीरामउवाच ॥ ॥ भगवन्सर्वधर्मज्ञप्रतिष्ठामलमागतम् ॥ यल्लोकेतद्वदब्रह्मन्दैवंनामकिमुच्यते ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ पौरुषंसर्वकार्याणांकर्त्तृराघवनेतरत् ॥ फलभोक्तृचसर्वत्रनदैवंतत्रकारणम् ॥ २ ॥ दैवंनकिंचित्कुरुतेनभुंक्तेनचविद्यते ॥ नदृश्यतेनाद्रियतेकेवलंकल्पनेदृशी ॥ ३ ॥ सिद्धस्यपौरुषेणेहफलस्यफलशालिना ॥ शुभाशुभार्थसंपत्तिर्दैवशब्देनकथ्यते ॥ ४ ॥

पुरुषस्यचपरमार्थतोनिर्विकारचिन्मात्ररूपत्वान्मनसोऽसत्वेकर्मासत्वात्तदात्मकदैवासत्वंफलितमित्याह ॥ यदिति ॥ १८ ॥ प्राणिन्त्वप्राणिनामभवति...
ण्वन्श्रोत्रंमन्वानोमनइतिश्रुतेरात्मनएवाध्यासान्मनआदिभावेनस्थितस्यकर्मतत्फलभावेनाप्यवस्थितिरितिसएवदैवमितियद्युच्यतेतत्सर्वस्तुनाममनतेनपुरुषस्वातंत्र्यविघातइत्या
शयेनाह ॥ एषएवेति ॥ मनःमनआदिभावंप्राप्तः ॥ १९ ॥ यद्यत्यंतासदेवमनस्तर्हिकथंतेनव्यवहारसिद्धिर्वंध्यापुत्रादिनातददर्शनादित्याशंक्ययौक्तिकदृशातस्यानिर्वचनीय
तांदर्शयंस्तदेतद्धृदयंमनश्चैतत्संज्ञानमाज्ञानंविज्ञानंप्रज्ञानमित्यादिश्रुतिमनुरुध्यमनसएवदैवादिसंज्ञाभेदाइत्याह ॥ मनइति ॥ दुर्निश्चयस्यसत्त्वासत्त्वचिज्जडत्वभेदाभेदादिनात
त्त्वतोनिश्चेतुमशक्यस्यमिथ्याभूतस्यमनसस्तदात्मतापन्नस्यपुरुषस्येतियावत् ॥२०॥ तथाचपुरुषस्वातंत्र्यंसिद्धमित्याह ॥एवंनामेति ॥ एवंपूर्वोक्तविधानिनामानियस्य॥२१॥
सपुरुषकारः ॥ २२ ॥ एवमपिप्राक्तनवासनापरवशस्यनेदानींस्वातंत्र्यसिद्धिरितिरामःशंकते ॥ प्राक्तनमिति ॥ कृपणोदीनःपरवशइतियावत् ॥२३॥ अस्त्विदानींफलेअस्वात्तं

यद्दैवंतानिकर्माणिकर्मसाधोमनोहितत् ॥ मनोहिपुरुषस्तस्माद्दैवंनास्तीतिनिश्चयः ॥ १८ ॥ एषएवमनोजंतुर्यद्यत्प्रयततेहितम् ॥ कृतं
तत्तदवाप्नोतिस्वतएवहिदैवतः ॥ १९ ॥ मनश्चित्तंवासनाचकर्मदैवंचनिश्चयः ॥ रामदुर्निश्चयस्यैताःसंज्ञास्सद्भिरुदाहृताः ॥ २० ॥ एवं
नामाहिपुरुषोदृढभावनयायथा ॥ नित्यंप्रयततेरामफलमाप्नोत्यलंतथा ॥ २१ ॥ एवंपुरुषकारेणसर्वमेवरघूद्वह ॥ प्राप्यतेनेतरेणेहत
स्मात्सशुभदोस्तुते ॥ २२ ॥ ॥ श्रीरामउवाच ॥ ॥ प्राक्तनंवासनाजालंनियोजयतिमांयथा ॥ मुनेतथैवतिष्ठामिकृपणःकिंकरोम्यहम्
॥ २३ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अतएवहिरामत्वंश्रेयःप्राप्नोपिशाश्वतम् ॥ स्वप्रयत्नोपनीतेनपौरुषेणैवनान्यथा ॥ २४ ॥ द्विविधोवा
सनाव्यूहःशुभश्चैवाशुभश्चते ॥ प्राक्तनोविद्यतेरामद्वयोरेकतरोथवा ॥ २५ ॥ वासनौघेनशुद्धेनतत्रचेदद्यनीयसे ॥ तत्क्रमेणशुभेनैव
पदंप्राप्स्यसिशाश्वतम् ॥ २६ ॥ अथचेदशुभोभावस्त्वांयोजयतिसंकटे ॥ प्राक्तनस्तदसौयत्नाज्जेतव्योभवताबलात् ॥ २७ ॥

त्र्यंऔत्तरकालिकफलानुकूलेयत्नेतुस्वातंत्र्यमस्त्येव ॥ सद्विद्यासंपन्नजन्मानुमितसत्प्रयत्नप्रारब्धफलायाःपूर्ववासनायाःस्वविरुद्धफलमात्रप्रतिरोधकत्वात्तदधिकृतजन्मन्य
पितत्प्रवृत्त्यस्वातंत्र्येकर्मब्रह्मविद्यापरशास्त्रवैयर्थ्यप्रसंगादित्यभिप्रेत्यश्रीवसिष्ठउवाच ॥ अतएवहीति ॥ अतःअधिकृतजन्महेतुवासनानुगुण्यादेव ॥ वासनानुगुण्यस्यजन्मवि
वेकसंपद्विशेषेणानुमानादितिभावः ॥ प्राप्नोपिप्राप्स्यसि ॥ वर्त्तमानसामीप्येवर्त्तमानवद्व्यपदेशः ॥ २४ ॥ उक्तमेवार्थंसमर्थयितुंवासनांविभज्यपृच्छति ॥ द्विविधइति ॥२५॥
तन्न्यायेनावदाह ॥ वासनौघेनेति ॥ २६ ॥ द्वितीयेप्याह ॥ अथेति ॥ नस्वातंत्र्येणवासनानामुद्बोधःकिंतूद्बोधकानुसारेण ॥ यद्यसत्समागमादिनादैवादेकाअशुभवासनोद्भवेत्त्वा
पितद्विरोधिसाधुसंगमसच्छास्त्रसेवनेनविरोधिवासनामुद्भाव्योत्पाद्यवाझटितितिरस्कार्येत्यर्थः ॥ २७ ॥

ननुयोमनसितिष्ठन्मनसोंतरोयंमनोनवेदेतिमनसःप्रेरकःप्राज्ञात्मान्यःश्रूयतेतदधीनेमनोवासनोद्भवेकथंममसद्वासनोद्भवस्वातन्त्र्यमित्याशयेनाह ॥
न्मात्रस्वभावःप्राज्ञःश्रुतःसएवत्वंनजडात्मकःसूक्ष्मःस्थूलोवादेहस्त्वंयेनान्यःस्याः ॥ नान्योतोस्तिद्रष्टातत्त्वमसीत्यादिश्रुतेः ॥ तत्तस्मादेवंचिन्मात्रस्वरूपस्यतवअन्येनचेतसाचे
तनेनचेत्यत्वंभास्यत्वंक्कविद्यते ॥ यदिप्राज्ञस्त्वदन्यःस्यात्तर्हिचितश्चिदंतरेणप्रकाशायोगात्त्वामपश्यन्नसर्वज्ञएवसस्यादतस्त्वमेवसइतिव्यतिहारेणैक्यंसिद्धमितिभावः ॥ पीठांत
रेअन्येनत्वंचेत्यदिचेत्यसेभास्यसेतर्हितेतवचेतस्त्वंचेतनत्वंक्कविद्यते ॥ चिद्भास्यस्यजडत्वापत्तेर्दुर्वारत्वादित्यर्थः ॥ २८ ॥ चितश्चिदंतरवेद्यत्वेतदप्यन्यवेद्यमित्यनवस्थापिस्या
दित्याह॥अन्यइति ॥इमंतच्चेतयितारंकश्चेतयेत् ॥ तस्याप्यन्यश्चेदनवस्थास्यात्साचनवास्तवीवस्तुसिद्धिकरीतितवसद्वासनोद्बोधयत्नेस्वातंत्र्यमव्याहतमितिभावः ॥ २९ ॥ पु
रुषस्वातंत्र्यप्रसाधनस्यफलमाह ॥ शुभाशुभाभ्यामिति ॥ ३० ॥ ३१ ॥ चित्तनदीहिद्वेधाप्रवहतिपुण्यायचपापायचतत्रैकस्रोतोनिरोधेअपरत्रद्विगुणंवहतीतियोगशास्त्रोक्ति

**प्राज्ञश्चेतनमात्रस्त्वंनदेहस्त्वंजडात्मकः ॥ अन्येनचेतसातत्तेचेत्यत्वंक्वेवविद्यते ॥ २८ ॥ अन्यस्त्वांचेतयतिचेत्तंचेतयतिकोपरः ॥ कइमं**
**चेतयेत्तस्मादनवस्थानवास्तवी ॥ २९ ॥ शुभाशुभाभ्यांमार्गाभ्यांवहंतीवासनासरित् ॥ पौरुषेणप्रयत्नेनयोजनीयाशुभेपथि ॥ ३० ॥**
**अशुभेषुसमाविष्टंशुभेष्वेवावतारय ॥ स्वंमनःपुरुषार्थेनबलेनबलिनांवर ॥ ३१ ॥ अशुभाच्चालितंयातिशुभंतस्मादपीतरत् ॥ जंतोश्चि**
**त्तंतुशिशुवत्तस्मात्तच्चालयेद्बलात् ॥ ३२ ॥ समतासांत्वनेनाशुनद्रागितिशनैःशनैः ॥ पौरुषेणैवयत्नेनपालयेच्चित्तबालकम् ॥ ३३ ॥**
**वासनौघस्त्वयापूर्वमभ्यासेनघनीकृतः ॥ शुभोवाप्यशुभोवापिशुभमद्यघनीकुरु ॥ ३४ ॥ प्रागभ्यासवशाद्यातायदातेवासनोदयम् ॥**
**तदाभ्यासस्यसाफल्यंविद्धित्वमरिमर्दन ॥ ३५ ॥ इदानीमपितेयातिघनतांवासनानघ ॥ अभ्यासवशतस्तस्माच्छुभाभ्यासमुपाहर**
**॥ ३६ ॥ पूर्वंचेद्घनतांयातानाभ्यासात्तववासना ॥ वर्द्धिष्यतेतुनेदानीमपितात्सुखीभव ॥ ३७ ॥**

मनुसृत्याह ॥ अशुभादिति ॥ चालितंनिवारितम् ॥ तस्माच्छुभादपिचालितमितरदशुभम् ॥ चालयेदशुभादितिशेषः ॥ ३२ ॥ इतिउक्तक्रमेणचित्तबालकमाशुशीघ्रमेवरागा
दिवैषम्यत्याजनेनस्वाभाविक्यांसमतायांसांत्वनेननिर्द्दोषतामापाद्यशनैःशनैरात्मस्वरूपेणनिरोधलक्षणेनपौरुषेणप्रयत्नेनपालयेन्नतुद्रागेवहठान्निरुध्यादुद्वेगात्समाधानभ्रंशो
माभूदिति ॥ तथाचभगवद्वचनंशनैःशनैरुपरमेद्बुद्ध्याधृतिगृहीतयेत्यादि ॥ ३३ ॥ त्वयाशुभोवाअशुभोवाघनीकृतोस्तुनामतथाप्यद्यशुभमेवघनीकुरु ॥ प्रथमेफलशैघ्र्याय
द्वितीयेतुविरोधिनिरासायतस्यावश्यकत्वादितिभावः ॥ ३४ ॥ नचवासनाभ्यासस्यवैफल्यंशंक्यंपूर्ववासनाभ्यासेषुप्रत्यक्षतःफलक्रमैरित्याह ॥ प्रागिति ॥ उदयमुद्भवंघनीभा
वमित्यर्थः ॥ ३५ ॥ इदानीमपीति ॥ तद्वदेवेतिभावः ॥ ३६ ॥ प्राक्तनवासनाघनीभावेपिसंदिहानंप्रत्याह ॥ पूर्वमिति ॥ तथाचयथोचितंसुखेनव्यवहर्तव्यमितिनदुर्वासनाव
द्धिप्रयुक्तानर्थसंभावनेनविषादस्तेयुक्तइतिभावः ॥ ३७ ॥

१ अन्येनचेत्यसेचेत्तेचेतस्त्वंक्वेवविद्यतेइति.

शुभाद्याचरणादस्यांशुभायांवासनावृद्धौतुनकश्चनदोषः ॥ शुभाशुभफलारंभसं
तर्हिकिमितिशुभवासनावर्द्धनेमांप्रवर्त्तयसितत्राह ॥ संदिग्धायामपीति ॥ समाहरउपचिनु ॥ शुभाद्याचरणादस्यांशुभायांवासनावृद्धौतुनकश्चनदोषः ॥ शुभाशुभफलारंभसं
दिग्धेपिशुभंचरेत् ॥ यदिनस्यात्तदाकिंस्याद्यदिस्यान्नास्तिकोहतइतिन्यायादितिभावः ॥ ३८ ॥ वस्तुतस्तुनसंदेहसंभावना अन्यत्राप्यभ्यासस्याभ्यस्यमानदार्ढ्यहेतुत्वक्लृप्ते
रित्याह ॥ यद्यदिति ॥ ३९ ॥ ४० ॥ तर्हिकियत्कालंशुभवासनाअभ्यसनीयातत्राह ॥ अव्युत्पन्नेति ॥ तत्त्वज्ञानपर्यंतमित्यर्थः ॥ प्रमाणानियुक्त्यनुभवादीनि ॥ ४१ ॥
पक्वावस्त्रादिलग्नमलभागाःक्षारपाकेनेवशिथिलितारागादिवासनाकषायायस्यतेन ततस्तदनंतरंविज्ञातात्मवस्तुना ॥ तथाचस्मृतिः ॥ कषायेकर्मभिःपक्वेततोज्ञानंप्रजायतइ
ति ॥ अतएवनिराधिनाअपगतमानसदुःखेनपूर्णेनेतियावत् ॥ ४२ ॥ उक्तमेवार्थंसंक्षिप्योपसंहरन्नाचरणीयंशुभंलक्षयति ॥ यदिति ॥ मनोज्ञभावाःशुभवासनास्तत्संपन्नया
बुद्ध्यापदंपरमार्थवस्तुअधिगमयसाक्षात्कुरु ॥ तच्छुभवासनानुसरणमप्यवमुच्यसाधुस्वरूपेतिष्ठ ॥ ४३ ॥ ॥ इतिश्रीवासिष्ठमहारा०तात्पर्यप्रकाशेमुमुक्षुव्यवहारप्रकरणे

संदिग्धायामपिभृशंशुभामेवसमाहर ॥ अस्यांतुवासनावृद्धौशुभाद्दोषोनकश्चन ॥ ३८ ॥ यद्यदभ्यस्यतेलोकेतन्मयेनैवभूयते ॥ इत्याकु
मारंप्राज्ञैरुदृष्टंसंदेहवर्जितम् ॥ ३९ ॥ शुभवासनयायुक्तस्तदत्रभवभूतये ॥ परंपौरुषमाश्रित्यविजित्येंद्रियपंचकम् ॥ ४० ॥ अव्युत्प
न्नमनायावद्भवानज्ञाततत्पदः ॥ गुरुशास्त्रप्रमाणैस्तुनिर्णीतंतावदाचर ॥ ४१ ॥ ततःपक्वकषायेणनूनंविज्ञातवस्तुना ॥ शुभोप्यसौत्व
यात्याज्योवासनौघोनिराधिना ॥ ४२ ॥ यदतिसुभगमार्यसेवितंतच्छुभमनुसृत्यमनोज्ञभावबुद्ध्या ॥ अधिगमयपदंसदाविशोकंत
दनुतदप्यवमुच्यसाधुतिष्ठ ॥ ४३ ॥ ॥ इतिश्रीवासिष्ठमहारामायणेवा०दे०मो०मुमुक्षुव्यवहारप्रकरणेकर्मविचारोनामनवमःसर्गः
॥९॥ ॥५॥ ॥श्रीवसिष्ठउवाच॥ ॥यथास्थितंब्रह्मतत्त्वंसत्तानियतिरुच्यते ॥ साविनेतुर्विनेतृत्वंसाविनेयविनेयता ॥ १ ॥

नवमःसर्गः ॥९॥ ॥ ५ ॥ ॥ धातुःस्वस्यचजन्माद्यसमस्तजनमुक्तये ॥ स्वोपदेशइतिप्रोक्तोज्ञानावतरणक्रमः ॥ १ ॥ नन्वस्तुदैवंनामप्राक्तनंपौरुषमेवेतितदाधुनि
केनशुभाचरणेनजय्यंनियतिस्तुदुर्जयैव ॥ याहिक्तातस्यकातितिवर्णितावैराग्यप्रकरणे ॥ तांहिभाविपदार्थानामवश्यंभावलक्षणांभवितव्यतापरपर्यायामप्रतीकार्यामाहुरभि
युक्ताः ॥ अवश्यंभाविभावानांप्रतीकारोभवेद्यदि ॥ तदादुःखैर्नलिप्येरन्नलरामयुधिष्ठिरादिति ॥ तथाचतन्नियम्यत्वेपिपुरुषस्यनस्वातंत्र्यमितिशंकांपरिजिहीर्षुःश्रीवसिष्ठउवा
च ॥ यथास्थितमिति ॥ ब्रह्मतत्त्वंयथास्थितंसच्चिदानंदस्वप्रकाशात्मनासर्वत्रसमतयासर्वानुकूल्येनस्थितंतत्संबंधिनीसर्वपदार्थानांसत्तैवभविष्यत्कालसंबंधेनव्यपदिश्यमाना
भवितव्यताख्यानियतिरुच्यते ॥ सत्ताचसर्वत्रयथास्थितंब्रह्मतत्त्वं ॥ तदेवहिकारणकार्ययोर्नियामकनियम्यरूपेणावतिष्ठते ॥ कारणेसत्यवश्यंकार्येणभाव्यंकार्येसत्यवश्यं
कारणेनभाव्यमितिनियतिर्नियमः ॥ साचविनेतुर्नियंतुःकारणादेर्विनेतृत्वंकार्यादिनियामकत्वम् ॥ विनेयस्यनियम्यस्यचकार्यादेर्विनेयतानियम्यता ॥ नियतपूर्वकालसत्ता
कारणतानियतपश्चात्कालसत्ताकार्यतेतितयोर्देशकालविशेषितसत्तामात्ररूपत्वादित्यर्थः ॥ पूर्वोक्तनियतिरपिसर्वकारणभूतब्रह्मसत्तारूपकालशक्तिरितिभावः ॥ १ ॥

अतःसर्वानुकूलब्रह्मसत्तारूपत्वात्पौरुषसाफल्येप्यनुकूलैवनियतिर्नप्रतिकूलेत्यतउक्तंवचनंवक्ष्यमाणमिदमेकाग्रकरणोपायबोधकंप्रथमतदेववचनमाह ॥
॥ २ ॥ इंद्रियाणिमनोरथविषयाभिलाषंस्वारूढानिसंतिअवांतरेमुक्तेरर्वाक्तनेऐहिकस्वर्गादिसुखेनिपातनशीलानिभवंत्यतस्तानियथामनोरथंनारोहंतितथापौरुषेणप्रयत्नेनसं
यम्यमनःसमतांनयेत्यर्थः ॥ ३ ॥ तदनंतरंयत्कार्यंतदाह ॥ इहेत्यादिना ॥ इहसिद्धिर्जीवन्मुक्तता अमुत्रसिद्धिर्विदेहमुक्तता ॥ इहमनुष्यलोकेअमुत्रस्वर्गादिलोकेषुचाधिका
रिणांज्ञानसिद्ध्यर्थमितिवा ॥ मोक्षोपायमयींमोक्षसाधनोपदेशप्रचुराम् ॥ यांसंहितांवक्ष्येतांस्वीकुर्वितिशेषः ॥ ४ ॥ तच्छ्रवणेमंदविरक्तस्यापिनाधिकारइतिद्योतनायापुनर्ग्र
हणायेति ॥ शमसंतोषौशांतिवैतृष्ण्यसुखे ॥ ५ ॥ कर्मकांडश्रुतयःपूर्ववाक्यानि ॥ उपासनापरश्रुतयउत्तरवाक्यानि ॥ अर्थविचारोज्ञानसाधकत्वं ॥ पूर्वापरवाक्यार्थविचार

अतःपौरुषमाश्रित्यश्रेयसेनित्यबांधवम् ॥ एकाग्रंकुरुतच्चित्तंशृणुचोक्तमिदंमम ॥ २ ॥ अवांतरनिपातीनिस्वारूढानिमनोरथम् ॥ पौ
रुषेणेंद्रियाण्याशुसंयम्यसमतांनय ॥ ३ ॥ इहामुत्रचसिद्ध्यर्थंपुरुषार्थफलप्रदाम् ॥ मोक्षोपायमयींवक्ष्येसंहितांसारनिर्मिताम् ॥ ४ ॥
अपुनर्ग्रहणायांतस्त्यक्त्वासंसारवासनाम् ॥ संपूर्णौशमसंतोषावादायोदारयाधिया ॥ ५ ॥ सपूर्वापरवाक्यार्थविचारविषयाहृतम् ॥
मनःसमरसंकृत्वासानुसंधानमात्मनि ॥ ६ ॥ सुखदुःखक्षयकरंमहानंदैककारणम् ॥ मोक्षोपायमिमंरामवक्ष्यमाणंमयाशृणु ॥ ७ ॥
इमांमोक्षकथांश्रुत्वासहसर्वैर्विवेकिभिः ॥ परंयास्यसिनिर्दुःखंनाशोयत्रनविद्यते ॥ ८ ॥ इदमुक्तंपुराकल्पेब्रह्मणापरमेष्ठिना ॥ सर्वदुः
खक्षयकरंपरमाश्वासनंधियः ॥ ९ ॥ ॥श्रीरामउवाच ॥ ॥ केनोक्तंकारणेनेदंब्रह्मन्पूर्वंस्वयंभुवा ॥ कथंचभवताप्राप्तमेतत्कथयमेप्र
भो ॥ १० ॥ ॥श्रीवसिष्ठउवाच ॥ ॥ अस्त्यनंतविलासात्मासर्वगःसर्वसंश्रयः ॥ चिदाकाशोविनाशात्माप्रदीपःसर्वजंतुषु ॥ ११ ॥
स्पंदास्पंदसमाकारात्ततोविष्णुरजायत ॥ स्यंदमानरसापूरात्तरंगःसागरादिव ॥१२॥

सहितंचतद्विषयैरहतंचेतिविग्रहः ॥ आत्मनिसानुसंधानंसमरसंगुरुशास्त्रोपदिष्टप्रकारस्यस्वानुभवस्यचैकरस्यापादनसहितमितियावत् ॥ ६ ॥ ७ ॥ अविवेकिनांश्रवणशाला
प्रवेशमपिवारयितुंसर्वैर्विवेकिभिरित्युक्तिः ॥ ८ ॥ इत्थंसांगंश्रवणमवतार्यश्रोतव्यशास्त्रादरसिद्ध्येतदवतारप्रकारंविवक्षुराह ॥ इदमिति ॥ पुराकल्पेकल्पादौ ॥ ९ ॥ वसिष्ठा
भिप्रायानुरूपंजिज्ञासुःश्रीरामउवाच ॥ केनेति ॥ १० ॥ तत्रादौपरमेष्ठिनोजन्मवक्तुंतन्मूलकारणमाह ॥ अस्तीति ॥ अनंतानांमायिकविलासानामधिष्ठानभूतआत्माअस्ति॥
सर्वगःसर्वांतरःसर्वसंश्रयःसर्वाधारइतितस्यमायातत्कार्यातिरेकद्योतनायोक्तम् ॥ सर्वजंतुषुप्रदीपइतिप्रत्यक्चिद्रूपत्वेननित्यापरोक्षतालाभाय ॥ ११ ॥ मायातत्कार्याणांस्पं
देअस्पंदेचसमएकआकारःस्वभावोयस्यतस्मान्निर्विकारादित्यर्थः ॥ विष्णुःसर्वकार्यव्यापनशीलोब्रह्मांडात्माविराट्सूक्ष्मभूतसृष्टिक्रमेणाजायत ॥स्यंदमानस्यरसस्यजलस्य
आपूरात्स्पंदास्पंदयोरप्यप्रच्युतजलैकस्वभावात्सागरात्तरंगइव ॥ अनेननिर्विकाराज्जगदुत्पत्तिर्विवर्त्तरूपैवनपरिणामइतिध्वन्यते ॥ १२ ॥

तस्यविराजःसुमेरुःकर्णिकायस्यदिशोदलानियस्यतादृशात्तारकाकेसरवतोत्हृदयांबुजात् ॥ १२ ॥ देवानांमुनीनांचमंडलैःसमूहैः ॥ सर्गप्राणिनिकायम् ॥ १४ ॥ १५ ॥ भा
वाभावौलाभालाभौताभ्यांविपण्णमंगमनोयस्य ॥ उत्पत्तिरुत्पातस्तत्सन्निहितोध्वंसोमरणंतत्रतत्परमल्पजीवितमितियावत् ॥ एतस्मिन्भूतजातीनांसर्गेनानाविधैर्विषयभोग
व्यसनैःसंकुलंजनस्यदुःखंदृष्ट्वेत्युत्तरत्रान्वयः ॥ १६ ॥ ईशस्तद्दुःखनिवारणसमर्थः ॥ १७ ॥ अंतयतिनाशयतीत्यंतःकउपायःस्यादितिचिंतयामास ॥ १८ ॥ प्रथमंशुद्धिसा

सुमेरुकर्णिकात्तस्यदिग्दलाद्धृदयांबुजात् ॥ तारकाकेसरवतःपरमेष्ठीव्यजायंत ॥ १३ ॥ वेदवेदार्थविद्देवमुनिमंडलमंडितः ॥ सोऽसृज
त्सकलंसर्गविकल्पौघंयथामनः ॥ १४ ॥ जंबूद्वीपस्यकोणेऽस्मिन्वर्षेभारतनामनि ॥ ससर्जजनसर्गौघंव्याधिव्याधिपरिप्लुतम् ॥ १५ ॥
भावाभावविपण्णांगमुत्पातध्वंसतत्परम् ॥ सर्गेऽस्मिन्भूतजातीनांनानाव्यसनसंकुलम् ॥ १६ ॥ जनस्यैतस्यदुःखंतद्दृष्ट्वासकललोक
कृत् ॥ जगामकरुणामीशःपुत्रदुःखात्पितायथा ॥ १७ ॥ कएतेषांहताशानांदुःखस्यांतोहतायुषाम् ॥ स्यादितिक्षणमेकाग्रंचिंतयामास
भूतये ॥ १८ ॥ इतिसंचिंत्यभगवान्ससर्जस्वयमीश्वरः ॥ तपोधर्मंचदानंचसत्यंतीर्थानिचैवहि ॥ १९ ॥ एतत्सृष्ट्वापुनर्देवश्चिंतयामास
भूतकृत् ॥ पुंसांनानेनसर्गस्यदुःखस्यांतइतिस्वयम् ॥ २० ॥ निर्वाणंनामपरमंसुखंयेनपुनर्जनः ॥ नजायतेनम्रियतेतज्ज्ञानादेवलभ्यते
॥ २१ ॥ संसारोत्तरणेजंतोरुपायोज्ञानमेवहि ॥ तपोदानंतथातीर्थमनुपायाःप्रकीर्त्तिताः ॥ २२ ॥ तत्तावद्दुःखमोक्षार्थंजनस्यास्यहतात्म
नः ॥ प्रत्यग्रंतरणोपायमाशुप्रकटयाम्यहम् ॥ २३ ॥ इतिसंचिंत्यभगवान्ब्रह्माकमलसंस्थितः ॥ मनसापरिसंकल्प्यमामुत्पादितवानिम
म् ॥ २४ ॥ कुतोऽप्युत्पन्नएवाशुततोहंसमुपस्थितः ॥ पितुस्तस्यपुनःशीघ्रमूर्मिरूर्मेरिवानघ ॥ २५ ॥ कमंडलुधरोनाथःसकमंडलुनामया ॥ सा
क्षमालःसाक्षमालंसप्रणम्याभिवादितः ॥ २६ ॥ एहिपुत्रेतिमामुक्त्वासस्वाब्जस्योत्तरेदले ॥ शुक्लाभ्रइवशीतांशुंयोजयामासपाणिना २७

धनसर्गमाह ॥ इतीति ॥ १९ ॥ सर्गस्यसृष्टेःसंबंधिनांपुंसांस्वसृष्टानामितियावत् ॥ अंतोमूलतोनिवृत्तिः ॥ २० ॥ जनोजीवःपुनर्नजायतेनम्रियतेतन्निर्वाणम् ॥ २१ ॥ अनुपा
याअसाधनानिप्रकीर्त्तिताःनकर्मणानप्रजयाधनेनप्लवाह्येतेअदृढायज्ञरूपाइत्यादिश्रुतिषु ॥ २२ ॥ प्रत्यग्रंनवंदृढमितियावत् ॥ २३ ॥ इमंत्वत्पुरःस्थंमाम् ॥ २४ ॥ कुतोपिअ
निर्वचनीयमायावशादेवोपाध्युत्पत्त्योत्पन्नःसन्नाशुसमुपस्थितःपितुःपितरमित्यर्थः ॥ २५ ॥ साक्षमालंयथास्यात्तथाप्रणम्यनम्रीभूयाभिवादितोनमस्कृतः ॥ २६ ॥ योजया
माससंयोजयामास ॥ उपवेशितवानितियावत् ॥ २७ ॥

॥ २८ ॥ वानरजातिरिवचंचलंचापलहेतुरज्ञानंकर्त्तृतेचेतःकर्मअभ्याविशतुप्रविशतु ॥ शशःकलंकः ॥ २९ ॥ विचारःपरमाठनःसंकल्पसामू ... ॥ ३३ ॥ ३४ ॥ तेनमे
श्चर्यें ॥ ३० ॥ दीनतांअपहृतधनइवकार्पण्यम् ॥ ३१ ॥ तूष्णींनिर्व्यापारोव्यवस्थितः ॥ ३२ ॥ दुःखमुपहंतीतिदुःखोपघातउपायस्तम् ॥ कर्मण्यण् ॥ ३३ ॥ ३४ ॥ तेनमे
प्रोक्तमित्युत्तरेणान्वयः ॥ ३५ ॥ पितुरधिकःसर्वोत्कृष्टोभिप्रायस्तत्त्वाववोधइवनिर्मलःपरिपूर्णस्वभावःस्थितः ॥ किलेत्याश्चर्यें ॥ ३६ ॥ सवक्ताउपदेष्टापितामामुवाच

मृगकृत्तिपरीधानोमृगकृत्तिनिजांबरम् ॥ मामुवाचपिताब्रह्मासुहंसःसारसंयथा ॥ २८ ॥ मुहूर्त्तमात्रंतेपुत्रचेतोवानरचंचलम् ॥ अ
ज्ञानमभ्याविशतुशशःशशधरंयथा ॥ २९ ॥ इतितेनाशुशनःसन्विचारसमनंतरम् ॥ अहंविस्मृतवान्सर्वंस्वरूपममलंकिल ॥ ३० ॥
अथाहंदीनतांयातःस्थितोऽसंबुद्धयाधिया ॥ दुःखशोकाभिसंतप्तोजातोजनइवाधनः ॥ ३१ ॥ कष्टंसंसारनामायंदोषःकथमिहागतः ॥
इतिचिंतितवानंतस्तूष्णीमेवव्यवस्थितः ॥ ३२ ॥ अथाभ्यधात्समांतातःपुत्रकिंदुःखवानसि ॥ दुःखोपघातंमांपृच्छसुखीनित्यंभविष्य
सि ॥ ३३ ॥ ततःपृष्टःसभगवान्मयासकललोककृत् ॥ हेमपद्मदलस्थेनसंसारव्याधिभेषजम् ॥ ३४ ॥ कथंनाथमहादुःखमयःसंसार
आगतः ॥ कथंचक्षीयतेजंतोरितिपृष्टेनतेनमे ॥ ३५ ॥ तज्ज्ञानंसुबहुप्रोक्तंयज्ज्ञात्वापावनंपरम् ॥ अहंपितुरभिप्रायःकिलाधिकइव
स्थितः ॥ ३६ ॥ ततोविदितवेद्यंमांनिजांप्रकृतिमास्थितम् ॥ सउवाचजगत्कर्त्तावक्तासकलकारणम् ॥ ३७ ॥ शापेनाज्ञपदंनीत्वाप्र
च्छकस्त्वंमयाकृतः ॥ पुत्रास्यज्ञानसारस्यसमस्तजनसिद्धये ॥ ३८ ॥ इदानींशांतशापस्त्वंपरंबोधमुपागतः ॥ संस्थितोहमिवैकात्मा
कनकंकनकादिवत् ॥ ३९ ॥ गच्छेदानींमहीपृष्ठेजंबूद्वीपांतरस्थितम् ॥ साधोभरतवर्षंत्वंलोकानुग्रहहेतुना ॥ ४० ॥ तत्रक्रियाकां
डपरास्त्वयापुत्रमहाधिया ॥ उपदेश्याःक्रियाकांडक्रमेणक्रमशालिना ॥ ४१ ॥ विरक्तचित्ताश्चतथामहाप्राज्ञाविचारिणः ॥ उपदेश्या
स्त्वयासाधोज्ञानेनानंददायिना ॥ ४२ ॥ इतितेननियुक्तोहंपित्राकमलयोनिना ॥ इहराघवतिष्ठामियावद्भूतपरंपरा ॥ ४३ ॥

॥ ३७ ॥ समस्तानामधिकारिजनानांज्ञानसिद्धये ॥ ३८ ॥ यथाकनकंचिरंमालिन्यसंसर्गादकनकभावमिवापन्नंपुनःशोधनेनादिकालस्थितशुद्धकनकभावेनावतिष्ठतेतद्वत
॥ ३९ ॥ फलमपिप्राग्बुद्ध्युपारूढंक्रियाहेतुरितिहेतुनेत्युच्यते ॥ ४० ॥ तत्रेति ॥ नबुद्धिभेदंजनयेदज्ञानांकर्मसंगिनामितिन्यायादितिभावः ॥ ४१ ॥ महाप्राज्ञाःसूक्ष्मार्थग्रह
णपटवः विचारिणोविमर्शशीलाः ॥ ४२ ॥ भूतपरंपराअधिकारिजनप्रवाहोयावत्स्थास्यतितावत् ॥ ४३ ॥

॥ अथवासंशांतयाव्रत्त्या
कर्त्तव्यंक्रियाप्रयोजनम् ॥ मनोऽतिक्रांतोऽतिमनानिर्मनस्कः ॥ अतएवसततंसुमेवनिरभिमानाधीर्यस्यांतयाव्रत्त्याकार्यंयथाप्राप्तानुवर्त्तनंकरोमि ॥ अथवासंशांतयाव्रत्त्या
स्थितोहंसततसुप्ताअज्ञाल्लेपांधियाकार्यंकरोमिस्वधियातुनकिंचित्करोमीत्यर्थः ॥ ४४ ॥ ॥ इतिश्रीवासिष्ठमहारामायणेतात्पर्यप्रकाशेमुमुक्षुव्यवहारप्रकरणेदशमःसर्गः
॥ १० ॥ ॥ ९ ॥ ॥ ज्ञानावतारविस्तारोरामवैराग्यसंस्तवः ॥ वक्तृप्रच्छकलक्ष्मादिप्राधान्येनात्रवर्ण्यते ॥ १ ॥ पुनर्विस्तरेणज्ञानावतारप्रकारंवक्तृप्रच्छकलक्षणंचवर्ण
यिष्यंस्तदवतारायोक्तमुपसंहरति ॥ एतदिति ॥ ममएतावज्ज्ञानावतरणंस्वस्वीयंईहितंजन्मादिचेष्टितंकमलोद्भवस्यमत्पितुश्चेष्टितंचैवतेकथितमित्यन्वयः ॥ १ ॥ सुकृतोदया
त्पुण्यपरिपाकात् ॥ २ ॥ तादृशसुकृतोदयःकीदृग्विधलक्षणैःपरिज्ञेयःकीदृशाश्चतल्लक्ष्यवस्तूपदेशप्रकारादितिप्राक्तनकथाविस्तरश्रवणमुखेनजिज्ञासुःश्रीरामउवाच ॥ कथमि

संशांतयासततसुप्तधियेहव्रत्त्याकार्यंकरोमिनचकिंचिदहं
कर्त्तव्यमस्तिनममेहहिकिंचिदेवस्यातव्यमित्यतिमनाभुविसंस्थितोस्मि ॥ संशांतयासततसुप्तधियेहव्रत्त्याकार्यंकरोमिनचकिंचिदहं
करोमि ॥ ४४ ॥ ॥ इतिश्रीवासिष्ठमहारामायणेवा०दे०मोक्षोपायेमुमुक्षुव्य०ज्ञानावतरणंनामदशमःसर्गः ॥ १० ॥ ॥ ९ ॥
॥ श्रीवसिष्ठउवाच ॥ ॥ एतत्तेकथितंसर्वंज्ञानावतरणंभुवि ॥ मयास्वमीहितंचैवकमलोद्भवचेष्टितम् ॥ १ ॥ तदिदंपरमंज्ञानंश्रोतुमद्य
तवानघ ॥ भृशमुत्कंठितंचेतोमहतःसुकृतोदयात् ॥ २ ॥ ॥ श्रीरामउवाच ॥ ॥ कथंब्रह्मन्भगवतोलोकेज्ञानावतारणे ॥ सर्गादनंतरं
बुद्धिःप्रवृत्तापरमेष्ठिनः ॥ ३ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ परमेब्रह्मणिब्रह्मास्वभाववशतःस्वयम् ॥ जातःस्पंदमयोनित्यमूर्मिरंबुनिधा
विव ॥ ४ ॥ दृष्ट्वैवमातुरंसर्गंसर्गस्यसकलांगतिम् ॥ भूतभव्यभविष्यस्थांददर्शपरमेश्वरः ॥ ५ ॥ सक्रियाक्रमकालस्यकृतादेःक्षयआ
गते ॥ मोहमालोच्यलोकानांकारुण्यमगमत्प्रभुः ॥ ६ ॥ ततोमामीश्वरःसृष्ट्वाज्ञानेनायोज्यचासकृत् ॥ विससर्जमहीपीठंलोकस्या
ज्ञानशांतये ॥ ७ ॥ यथाहंप्रहितस्तेनतथान्येचमहर्षयः ॥ सनत्कुमारप्रमुखानारदाद्याश्चभूरिशः ॥ ८ ॥ क्रियाक्रमेणपुण्येनतथाज्ञानक्र
मेणच ॥ मनोमोहामयोन्नद्धमुद्धर्त्तुंलोकमीरिताः ॥ ९ ॥

ति ॥ कथंकेनप्रकारेण ॥ तंप्रकारंविस्तरेणवर्णयेत्यर्थः ॥ ३ ॥ स्वस्यभावःप्राक्तनविद्याकर्मवासनाप्रचयस्तद्वशतः ॥ स्वयमेवतदनुरूपोपाध्यात्माजातः ॥ स्पंदमयःक्रियाश
क्तिप्रचुरः ॥ नित्यमभीक्ष्णम् ॥ ४ ॥ सचभुवनभूतग्रामसर्गानंतरसर्गस्रष्टजनमेवंजन्मजरामृत्युनरकादिप्रकारेणस्वाज्ञानवशादातुरंदुःखितंदृष्ट्वातद्दृष्टांतेनैवभूतभव्यभविष्यत्का
लस्थामपिसर्गस्यसकलांगतिंददर्श ॥ ५ ॥ विशेषेणचस्वर्गापवर्गसाधनानुष्ठानयोग्यकालस्यकृतयुगादेःक्षयेआगतेलोकस्यभाविनंमोहमालोच्य ॥ ६ ॥ असकृदुपदेशेनज्ञा
नेनायोज्यसंयोज्य ॥ ७ ॥ ८ ॥ क्रियाकर्मतदुपदेशक्रमेण ॥ चाद्युपासनोपदेशक्रमेण ॥ मनश्चमोहोज्ञानंचतावेववातयुक्तोवाआमयःसंसाररोगस्तेनोन्नद्धंवद्धंवशीकृतमिति

महर्षिभिर्भूपालाःपरिकल्पिताइत्युत्तरेणान्वयः ॥ शुद्धेवैदिकेरागलोभाद्यनुपहतेवा ॥१०॥ विधानार्थंप्रवर्त्तनार्थम् ॥ ११ ॥ अ
नियमनोचितानिस्मृतिशास्त्राणिकल्पितानि ॥ १२ ॥ भोजनग्रहणंभोगमात्रस्योपलक्षणंशालिग्रहणंचविषयमात्रस्य ॥ १३ ॥ द्वंद्वानिलक्षणयातन्निष्ठानिवैराणि ॥ विषया
र्थंदेशार्थंभोग्यार्थंवा ॥ यद्वाद्वंद्वानिशीतोष्णादीनि ॥ विषयार्थंतत्परिहारोपायविषयसंपादनार्थम् ॥ ततश्चविषयसिद्धेर्धनमूलत्वाद्धनार्थंभूतानिपरभूभुजांदंड्यतांदंडनीयतां
संप्रयातानि ॥ १४ ॥ पूर्वंक्षमाःसमर्थाअपिततस्तदनंतरंनसमर्थाःसंतोदीनाएवदैन्यात्तद्भावंयाताः ॥ देहेआत्मताबुद्ध्यायुद्धादौदेहनाशेआत्मनाशभयादित्यर्थः ॥१५॥ सम्य

क्रियाक्रमविधानार्थंमर्यादानियमायच ॥ महर्षिभिस्ततस्तैस्तैःक्षीणेकृतयुगेपुरा ॥ क्रमाक्रियाक्रमेशुद्धेपृथिव्यांतनुतांगते ॥ १० ॥ धर्मकामार्थसिद्ध्यर्थंकल्पितान्युचिता न्यथ ॥ ११ ॥ बहूनिस्मृतिशास्त्राणियज्ञशास्त्राणिचावनौ ॥ पृथग्देशविभागेनभूपालाःपरिकल्पिताः ॥ १२ ॥ कालचक्रेवहत्यस्मिंस्ततोविगलितेक्रमे ॥ प्रत्यहंभोजनपरेजनेशाल्यर्जनोन्मुखे ॥ १३ ॥ द्वंद्वानिसंप्रवृत्तानिविषयार्थंम हीभुजाम् ॥ दंड्यतांसंप्रयातानिभूतानिभुविभूरिशः ॥ १४ ॥ ततोयुद्धंविनाभूपामहींपालयितुंक्षमाः ॥ नसमर्थास्तदायाताःप्रजाभिः सहदैन्यताम् ॥ १५ ॥ तेषांदैन्यापनोदार्थंसम्यग्दृष्टिक्रमायच ॥ ततोस्मदादिभिःप्रोक्तामहत्योज्ञानदृष्टयः ॥ १६ ॥ अध्यात्मविद्यातेनेयं पूर्वंराजसुवर्णिता ॥ तदनुप्रसृतालोकेराजविद्येत्युदाहृता ॥ १७ ॥ राजविद्याराजगुह्यमध्यात्मज्ञानमुत्तमम् ॥ ज्ञात्वाराघवराजानः परांनिर्दुःखतांगताः ॥ १८ ॥ अथराजस्वतीतेषुबहुष्वमलकीर्त्तिषु ॥ अस्मादृशरथाद्रामजातोद्यत्वमिहावनौ ॥ १९ ॥ तवचातिप्रसन्ने स्मिन्जातंमनसिपावनम् ॥ निर्निमित्तमिदंचारुवैराग्यमरिमर्दन ॥ २० ॥ सर्वस्यैवहिसर्वस्यसाधोरपिविवेकिनः ॥ निमित्तपूर्वंवैरा ग्यंजायतेरामराजसम् ॥ २१ ॥ इदंत्वपूर्वमुत्पन्नंचमत्कारकरंसताम् ॥ तवानिमित्तंवैराग्यंसात्विकंस्वविवेकजम् ॥ २२ ॥ बीभत्संवि षयंदृष्ट्वाकोनामनविरज्यते ॥ सतामुत्तमवैराग्यंविवेकादेवजायते ॥ २३ ॥ तेमहांतोमहाप्राज्ञानिमित्तेनविनैवहि ॥ वैराग्यंजायतेये षांतेषांह्यमलमानसम् ॥ २४ ॥

दृष्टिरात्मतत्त्वज्ञानंतस्यक्रमणंक्रमोलोकेप्रचारस्तस्मै ॥ १६ ॥ तेनोक्तहेतुना ॥ राजविद्येत्युदाहृताव्यासादिभिः ॥ १७ ॥ १८ ॥ १९ ॥ अतिप्रसन्नेअत्यंतनिर्मले ॥ निर्नि
मित्तंश्मशानमापद्दैन्यमितिवक्ष्यमाणदृष्टनिमित्तरहितम् ॥ २० ॥ सर्वस्यविवेकिनःपुरुषसार्थस्यमध्येसाधोरुत्तमत्वेनप्रसिद्धस्यापिसर्वस्यबहुतरजनस्यसर्वस्यविषयस्य
वंधीतिवा ॥ रजोगुणकार्यदृष्टदुःखानुभवनिमित्तमतएवराजसम् ॥ २१ ॥ सत्वात्सुखंचज्ञानंचेत्यादिस्मृतेर्विवेकज्ञानमात्रजत्वात्सात्विकम् ॥ २२ ॥ उक्तमेवव्यनक्ति ॥ बी
भत्समिति ॥ २३ ॥ २४ ॥

स्वविवेकवशादेवयश्चमत्कारपरामर्शस्तत्स्वाभिमुख्यंतेनेतरविषयेभ्योविरक्तया ॥२५॥२६॥इदंदृश्यजातमिंद्रजालमिवेंद्रजालंमायिकमितियावत्॥नवास्तमेवांकितुवाह्यसहि तमाभ्यंतरंदेहेंद्रियप्राणमनोबुद्ध्यविद्यांतमपि॥२७॥२८॥अलमत्यंतमागतःप्राप्तवान् ॥ ज्ञानानांविद्यानांसारआत्मविद्यातस्य ॥ २९ ॥ तपःप्रभावाद्देवप्रसादाच्च यस्यदेवेपरा भक्तिः ईश्वरानुग्रहादेवपुंसामद्वैतवासना ॥ प्रसादादेवरुद्रस्यभवानीसहितस्यतु ॥ अध्यात्मविषयंज्ञानंजायतेबहुजन्मभिरित्यादिश्रुतिस्मृत्याद्यनुसरन्नाह॥प्रसादादिति ॥३०॥ तमेतंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेनतपसानाशकेनेत्यादिश्रुतिमनुसृत्याह ॥क्रियाक्रमेणेति ॥ क्रियाक्रमश्चगर्भाधानपुंसवनसीमंतोन्नयनजातकर्मनामकरणा न्नप्राशनचौलोपनयनंचत्वारिवेदव्रतानिस्नानंसहधर्मचारिणीसंयोगःपंचानांयज्ञानामनुष्ठानमष्टकापार्वणंश्राद्धंश्रावण्याग्रयणीचैत्र्याश्वयुजीतिसप्तपाकसंस्थाअग्न्याधेयम

स्वविवेकचमत्कारपरामर्शविरक्तया॥ राजतेहिधियाजंतुर्युवेववरमालया ॥ २५ ॥ परामृश्यविवेकेनसंसाररचनामिमाम्॥ वैरा ग्यंयेऽधिगच्छंतितएवपुरुषोत्तमाः॥ २६ ॥ स्वविवेकवशादेवविचार्यैदंपुनःपुनः ॥ इंद्रजालंपरित्याज्यंसबाह्याभ्यंतरंबलात् ॥ २७ ॥ श्मशानमापदंदैन्यंदृष्ट्वाकोनविरज्यते॥ तद्वैराग्यंपरंश्रेयःस्वतोयदभिजायते ॥ २८ ॥ अकृत्रिमविरागत्वंमहत्त्वमलमागतः ॥ योग्यो सिज्ञानसारस्यबीजस्येवमृदुस्थलम्॥ २९ ॥ प्रसादात्परमेशस्यनाथस्यपरमात्मनः॥ त्वादृशस्यशुभावुद्धिर्विवेकमनुधावति॥३०॥ क्रियाक्रमेणमहतातपसानियमेनच॥ दानेनतीर्थयात्राभिश्चिरकालंविवेकतः ॥ ३१ ॥ दुष्कृतक्षयमापन्नेपरमार्थविचारणे॥ काक तालीययोगेनबुद्धिर्जंतोःप्रवर्त्तते॥३२॥ क्रियापरास्तावदलंचक्रावर्त्तिभिरावृताः॥ भ्रमंतीहजनायावन्नपश्यंतिपरंपदम्॥ ३३ ॥

ग्निहोत्रंदर्शपूर्णमासौचातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबंधःसौत्रामणीतिसप्तहविर्यज्ञसंस्थाअग्निष्टोमोऽत्यग्निष्टोमउक्थ्यःषोडशीवाजपेयोतिरात्रआप्तोर्याम इतिसप्तसोमय ज्ञसंस्थाइत्येतेचत्वारिंशत्संस्काराअष्टावात्मगुणादयासर्वभूतेषुक्षांतिरनसूयाशौचमनायासोमांगल्यमकार्पण्यमस्पृहेतियस्यैतेचत्वारिंशत्संस्काराअष्टावात्मगुणाश्चसब्रह्मणः सायुज्यंप्राप्नोतीतिगौतमस्मृतौदर्शितः ॥ नियमेनेंद्रियप्राणमनोनियमनेन ॥ ३१ ॥ काकागमनमिवतालपतनमिवसंपन्नेनयोगेनसाधनसमूहमेलनेन ॥ समासाच्चतद्विषयादि त्युपमानविषयात्समासादुपमानांतरस्थः ॥ तथाचब्रह्मजिज्ञासाप्रयोजकविचारोदयएवदुर्लभइतिभावः ॥ ३२ ॥ तत्कुतः ॥ यावत्परंपदंनपश्यंतितावच्चक्रमिवावर्त्तयंतिभ्र मयंतिपुरुषंतच्छीलैरागादिभिरावृता.संत सर्वेप्यैहिकामुष्मिकभोगसाधनक्रियापराएवेहसंसारेभ्रमंति ॥ अविद्यायामंतरेवर्त्तमानाःस्वयंधीराःपंडितंमन्यमानाः दंद्रम्यमाणाः परियंतिमूढाअंधेनैवनीयमानायथांधाइत्यादिश्रुतेरितिभावः ॥ ३३ ॥

परीक्षणेनप्रकृष्टवक्तारमनिर्णीय ॥ बालोमूर्खः ॥ ४८ ॥ पूर्वापरयोरुक्तानुक्तयोःसमाधानेविविच्यावधारणेक्षमासमर्थाबुद्धिर्यस्य ॥ ४९ ॥ एवमपरीक्ष्यवक्तारमपिनिंदति॥ प्रामाणिकेति ॥ ५० ॥ वक्तृप्रच्छकलक्षणोक्तेःप्रकृतोपयोगंदर्शयति ॥ त्वमिति ॥ ५१ ॥ ५२ ॥ कुलेनगुणैःसदाचारादिभिश्चमहान् ॥ ५३ ॥ मेधाप्रतिभाशालिनीत्वंविशेष णद्वयेनलभ्यते ॥ अर्कभाःसूर्यप्रभा ॥ ५४ ॥ आदरदृढीकरणायाह ॥ यद्यदिति ॥ प्रयत्नतश्चिराभ्यासादिप्रयत्नेन ॥ ५५ ॥ प्रयत्नांतरमप्याह ॥ मनइति ॥ ५६ ॥ तत्रप्रथमो पदेष्टव्यार्थमाह ॥ अविवेकिनमिति ॥ नविद्यतेज्ञानंशास्त्रोत्थंयस्यतम् ॥ दूरतरेअतिदूरे ॥ ५७ ॥ तत्फलमाह ॥ नित्यमिति ॥ ५८ ॥ ५९ ॥ अशक्तौत्रयस्तदशक्तौद्वौवा

अनिर्णीयप्रवक्तारंबालःप्रश्नंकरोतियः॥ अधमःप्रच्छकःसस्यान्नमहार्थस्यभाजनम् ॥४८॥ पूर्वापरसमाधानक्षमबुद्धावनिंदिते॥ पृष्टंप्राज्ञेनवक्तव्यंनाधमेपशुधर्मिणि ॥ ४९॥ प्रामाणिकार्थयोग्यत्वंप्रच्छकस्याविचार्यच ॥ योवक्तितमिहप्राज्ञाःप्राहुर्मूढतरंनरम् ॥५०॥ त्वमतीवगुणश्लाघीप्रच्छकोरघुनंदन॥ अहंचवक्तुंजानामिसमोयोगोयमावयोः ॥ ५१ ॥ यदहंवच्मितद्यत्नात्त्वयाशब्दार्थ कोविद॥ एतद्वस्त्वितिनिर्णीयहृदिकार्यमखंडितम् ॥ ५२ ॥ महानसिविरक्तोसितत्त्वज्ञोसिजनस्थितौ ॥ त्वयिचोक्तंलगत्यंतःकुंकुमां बुयथांशुके॥५३॥ उक्तावधानपरमापरमार्थविवेचिनी॥ विशत्यर्थंतवप्रज्ञाजलमध्यमिवार्कभाः ॥ ५४ ॥ यद्यद्वच्मितदादेयंत्वदि कार्यंप्रयत्नतः॥ नोचेत्प्रष्टव्यएवाहंनत्वयेहनिरर्थकम् ॥ ५५॥ मनोहिचपलंरामसंसारवनमर्कटम्॥ संशोध्यत्वदियत्नेनश्रोतव्यापर मार्थगीः ॥५६॥ अविवेकिनमज्ञानमसज्जनरतिंजनम् ॥ चिरंदूरतरेकृत्वापूजनीयाहिसाधवः ॥५७॥ नित्यंसज्जनसंपर्काद्विवेकउ पजायते॥ विवेकपादपस्यैवभोगमोक्षौफलेस्मृतौ॥५८॥ मोक्षद्वारेद्वारपालाश्चत्वारःपरिकीर्त्तिताः॥ शमोविचारःसंतोषश्चतुर्थःसा धुसंगमः॥५९॥ एतेसेव्याःप्रयत्नेनचत्वारोद्वौत्रयोथवा॥ द्वारमुद्घाटयंत्येतेमोक्षराजगृहेतथा॥६०॥ एकंवासर्वयत्नेनप्राणांस्त्यक्त्वा समाश्रयेत्॥ एकस्मिन्वशगेयांतिचत्वारोपिवशंयतः॥६१॥ सविवेकोहिशास्त्रस्यज्ञानस्यतपसःश्रुतेः ॥ भाजनंभूषणाकारोभास्क रस्तेजसामिव॥६२॥ घनतामुपयातंहिप्रज्ञामांद्यमचेतसाम् ॥ यातिस्थावरतामंबुजाड्यात्पाषाणतामिव ॥६३॥ त्वंतुराघवसौज न्यगुणशास्त्रार्थदृष्टिभिः॥ विकासितांतःकरणःस्थितःपद्मइवोदये॥६४॥

॥ ६० ॥ प्राणांस्त्यक्त्वेत्यादरणीयत्वातिशयोक्तिः ॥६१ ॥ विवेकेनसहितःसविवेकःपुरुषःशास्त्रस्यश्रुतेःश्रवणस्यतपसस्तदर्थालोचनस्यचभाजनंयोग्यः॥ भूषणाकारःशिरोभू षणमिवश्रेष्ठोनादरणीयः॥ तेजसांमध्येभास्करइव ॥ ६२ ॥ प्रज्ञामांद्यंमौर्ख्यम् ॥ घनतामभेद्यताम् ॥ स्थावरतामद्रवतांकाठिन्यमितियावत ॥ जाड्यात्शीतातिशयात् ॥ प्र सिद्धंहीदंहिमघरकादौ ॥ ६३ ॥ उन्मुखीकरणायपुनारामप्रशंसति ॥ त्वमिति ॥ ६४ ॥

॥ ६६॥ प्रज्ञांविवेकग्रहणधारणपटीयसीं अवबोद्धुंमंतुम् ॥ उद्धतौऊर्ध्वीकृतौकर्णौयेनतथाविधोजंतुर्मृगादिरिव ॥ ६५ ॥ सुजनानांधर्मःसौजन्यंविनयादितद्रूपाणांसंपदाम् ॥ ६६॥ प्रज्ञांविवेकग्रहणधारणपटीयसीं
बुद्धिम् ॥ ६७ ॥ तद्दृद्धावप्येतद्ग्रंथपरिशीलनमेवोपायइत्यभिप्रेत्याह ॥ एतदिति ॥ ६८ ॥ आस्पदंप्रतिष्ठा ॥ यतःसंमोहयेत्तस्मादितिशेषः ॥ मौर्ख्यमज्ञानम् ॥ ६९ ॥ दुरा
शयासर्पगतिंकुटिलगतिंवहतीतिसर्पगत्येनत्वद्दिव्हतेप्रतीचिवल्गताविक्षेपसहस्रात्मनाचलता ॥ चेतोबुद्धिश्चिदात्मावा ॥ संकोचंसंकुचितपद्मवदप्रसन्नतांमालिन्यमितियावत्
॥७०॥ कर्तार्हिप्रसीदतीतिमाह ॥ प्राज्ञेइति ॥ इयंप्रागुक्ता वस्तुपरमार्थरूपंदृश्यतेययासावस्तुदृष्टिःसूक्ष्मबुद्धिः ॥ दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिरितिश्रुतेः ॥ यथा
र्थभूतायथार्थवस्त्वैकरस्यमापन्ना ॥ अथवावस्तुभूतादृष्टिश्चिदात्माप्राज्ञेउपदेष्टरिसतिप्रसीदत्यज्ञानमालिन्यमपास्यस्फुरति ॥७१॥ मतिविकासलक्षणमाचक्षाणस्तद्वंतंप्रशंस

इमांज्ञानगिरंश्रोतुमवबोद्धुंचसन्मते ॥ अर्हस्युद्धतकर्णस्त्वंजंतुर्वीणास्वनंयथा ॥ ६५ ॥ वैराग्याभ्यासयोगेनसमसौजन्यसंपदाम् ॥
आदौसंसारमुक्त्यर्थंप्रज्ञामेवाभिवर्द्धयेत् ॥६७॥
अर्ज्जनांकुरुतांरामयत्रनाशोनविद्यते ॥६६॥ शास्त्रसज्जनसंसर्गपूर्वकैःसतपोदमैः ॥ संसारविषवृक्षोयमेकमास्पदमापदाम् ॥
एतदेवास्यमौर्ख्यस्यपरमंविद्धिनाशनम् ॥ यदिदंप्रेक्ष्यतेशास्त्रंकिंचित्संस्कृतयाधिया ॥६८॥ चेतःसंकोचमायातिचर्माग्नाविवयोजित
अज्ञंसंमोहयेन्नित्यंमौर्ख्यंयत्नेननाशयेत् ॥ ६९ ॥ दुराशासर्पगत्येनमौर्ख्येणत्वद्दिवल्गता ॥ पूर्वापरविचारार्थचारुचातुर्यशालिनी ॥
म् ॥७०॥ प्राज्ञेयथार्थभूतेयंवस्तुदृष्टिःप्रसीदति ॥ दृगिवेंदौनिरंभोदेसकलामलमंडले ॥ ७१ ॥ गुणवतात्हृदयेनविराजसे
सविकासामतिर्यस्यसपुमानिहकथ्यते ॥ ७२ ॥ विकसितेनसितेनतमोमुचावरविचारणशीतलरोचिषा ॥ पृच्छकलक्षणंनामएकादशः
त्वममलेननभःशशिनायथा ॥७३॥ ॥इतिश्रीवासिष्ठमहारा०वा०दे०मो०मुमुक्षुव्यवहारप्रकरणेवक्तृ ॥ वेत्सिचोक्तंचतेनाहंप्रवृत्तोवक्तुमादरात् ॥ १ ॥
सर्गः ॥११॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥परिपूर्णमनामान्यःप्रष्टुंजानासिराघव

स्वमतिर्स्ता
ति ॥ पूर्वेति ॥ पूर्वापरविचारेणसूक्ष्मतमार्थग्रहणपटीयसाचातुर्येणचशोभमानामतिःसविकासेत्यर्थः ॥ पुमान्पुरुषार्थसंपादनेनसार्थकीकृतपुंजन्मेत्यर्थः ॥७२॥ स्वमतिस्तां
सविकासानवेतिसंदिहानंराममाश्वासयन्नाह ॥ विकसितेनेति ॥ तमोऽज्ञानंमुंचताअतएवसितेनस्वच्छेनगुणवताशांत्यादिगुणशालिनात्हृदयेनप्रागुक्तबुद्ध्यात्वंविराजसे ॥ ७३॥
॥ इतिश्रीवासिष्ठमहारा०तात्पर्यप्रकाशेमुमुक्षुव्यवहारप्रकरणेएकादशःसर्गः ॥ ११ ॥ ॥७॥ ॥ अनर्थताभवगतेर्ज्ञानमाहात्म्यमुत्तमम् ॥ रामेचप्रच्छकगुणसन्तति
रिहवर्ण्यते ॥ १ ॥ अन्येषामपिविवेकवैराग्यदार्ढ्यायसंसारगतेरनर्थरूपतांज्ञानमाहात्म्यंचविवक्षुस्तत्प्ररोचनायनकेवलंत्वयिसविकासाबुद्धिरेवापितुअन्येपिबहवोगुणाःप्रच्छ
कलक्षणंचसमग्रमस्तीतिप्रशंसनेनरामंप्रोत्साहयन्श्रीवसिष्ठउवाच ॥ परिपूर्णमनाइति ॥ उक्तवक्ष्यमाणैर्गुणैःपरिपूर्णमनोयस्य ॥ उक्तंचसामान्योक्तिसूचितमपिवेत्सिविशि
ष्यावधारयसि ॥ १ ॥

रजसामतेश्चापलंस्यात्तमसात्वावरणमतस्तद्रहितामतएवशुद्धसत्वगुणेपरमात्मनिचानुपातिनीम् ॥ आत्मनिसंस्थाप्यस्वस्थीकृत्य ॥ स्थिरउद्युक्तः ॥ २ ॥ रत्नानांश्रीःसंपत्तद्रत्न सहिताश्रीर्लक्ष्मीश्च ॥ ३ ॥ शिष्यांश्चपुत्रवत्पश्येदितिन्यायात्सुतेतिसंबोधनम् ॥ आर्द्रत्वंसद्रवताम ॥ लग्नश्चंद्रकराणामुत्करोयस्मिन् ॥ ४ ॥ अभ्यासःपरिशीलनंसंबंधइतिया बत् ॥ शुद्धस्यतव ॥ दीर्घैःसर्वदिक्प्रसृतैः॥संततैरविच्छिन्नैः ॥ पद्मपक्षेगुणैस्तंतुभिःसौरभ्यादिभिश्च ॥ ५ ॥ भाजनंश्रवणफलप्रबोधाधारः ॥ शुद्धाशुभ्रा ॥ सविकासाचंद्रक तप्रबोधाधारः ॥ यथाचंद्रएवकुमुद्वतीसविकासातथेयंकथात्वय्येवसविकासेतिवार्थः ॥ ६ ॥ नन्वस्यकथाश्रवणसमारंभस्यकोवधिरितिचेत्परमपददर्शनविश्रांतिरेवेत्यभिप्रे त्याह ॥ येकेचनेति ॥ तेसर्वेसमारंभात्ताःसर्वाःप्रमाणप्रमेयदृष्टयः ॥ नन्विहपुमान्स्त्रियेत्येकशेषेणभाव्यंनहिद्वंद्वइवैकशेषोवैकल्पिकइतिचेत्सत्यम ॥ तथापिमहाभाष्याद्यभि

रजस्तमोभ्यांरहितांशुद्धसत्वानुपातिनीम् ॥ मतिमात्मनिसंस्थाप्यज्ञानंश्रोतुंस्थिरोभव ॥ २ ॥ विद्यतेत्वयिसर्वैवप्रच्छकस्यगुणाव ली ॥ वक्तुर्गुणालोचमयिरत्नश्रीर्जलधौयथा ॥ ३ ॥ आसवानसिवैराग्यंविवेकासंगजंसुत ॥ चंद्रकांतइवार्द्रत्वंलग्नचंद्रकरोत्करः ॥४॥ चिरमाशैशवादेवतवाभ्यासोस्तिसद्गुणैः ॥ शुद्धैःशुद्धस्यदीर्घैश्चपद्मस्येवातिसंततैः ॥५॥ अतःशृणुकथांवक्ष्येत्वमेवास्याहिभाजनम् ॥ नहिचंद्रंविनाशुद्धासविकासाकुमुद्वती ॥ ६ ॥ येकेचनसमारंभायाश्चकाश्चनदृष्टयः ॥ तेचताश्चपदेदृष्टेनिःशेषंयांतिवैशमम् ॥ ७ ॥ य दिविज्ञानविश्रांतिर्नभवेद्भव्यचेतसः ॥ तदस्यांसंसृतौसाधुश्चिंतामौर्व्यसहेतकः ॥ ८ ॥ परंप्राप्यविलीयंतेसर्वामननवृत्तयः ॥ कल्पांता र्कगणासंगात्कुलशैलशिलाइव ॥ ९ ॥ दुःसहारामसंसारविषावेशविषूचिका ॥ योगगारुडमंत्रेणपावनेनप्रशाम्यति ॥ १० ॥ सच योगःसज्जनेनसहशास्त्रविचारणात् ॥ परमार्थज्ञानमंत्रोनूनंलभ्यतएवच ॥ ११ ॥ अवश्यमिहहिविचारेकृतेसकलदुःखपरिक्षयोभव तीतिमंतव्यंनातोविचारदृष्टयोऽवहेलयाद्रष्टव्याः ॥ १२ ॥

युक्तप्रयोगेष्वेकशेषवृत्तेःस्वपदविग्रहवाक्यप्रयोगदर्शनाददोषः ॥७॥ उक्तविश्रांतावनाश्वासंवारयति ॥ यदीति ॥ साधुर्विवेकीकःसहेत ॥ तदसहनात्स्वमिवदेहत्यागोयुक्तःस्या दितिभावः ॥ ८ ॥ नकेवलंवासदृष्टयएवविलीयंतेऽपितुमानसाअपीत्याह ॥ परमिति ॥ तथाचश्रुतिः ॥ भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः ॥ क्षीयंतेचास्यकर्माणितस्मि न्दृष्टेपरावरइति ॥ दृष्टांतपक्षेहिरण्यगर्भस्यायुरंतम ॥ ९ ॥ लोकेविषसंबंधादपिविषूचिकाप्रसिद्धा ॥ योगोजीवस्यब्रह्मैक्यबोधःसएवगारुडमंत्रस्तेन ॥ पावनेनविषशोधनेन ॥ १० ॥ सज्जनेनगुरुसतीर्थ्यादिनासह ॥ चकारात्फलंतिच ॥ ११ ॥ यथोक्तमर्थंगद्यैःप्रपंचयति ॥ अवश्यमित्यादिना ॥ इहास्मिन्नधिकारिजन्मनिअवश्यंभवतीत्यन्वयः ॥ अवहेलयाअनादरेणनद्रष्टव्याः ॥१२॥

विचारवतासम्यगदर्शनवताअतएवशीतलांतःकरणेनपुरुषेण ॥ वशतइतिपाठेतुविचारस्यवशोऽपरोक्षबोधस्ततः ॥ सर्पेणपरिपक्वांजीर्णांत्वचमिवसर्वमाधिपंजरंसंत्यज्या विग

लमिदंजगदिंद्रजालमिवकौतुकंसुखरूपमवलोक्यते ॥ परमित्यवधारणेनिपातः ॥ परमुत्कृष्टंदुःखमितिवा ॥ १३ ॥ प्रतिज्ञातंवैषम्यमेवदृष्टांतैःप्रपंचयति ॥ भोगीवेत्यादिना ॥ अशंकितमनाशंकितमनर्थशंकांविनैवमो

मोहांधकूपेइत्यंतेसर्वत्रसंसाररागस्यैवकर्तृत्वेनान्वयः ॥ विवशीकरोतीत्यंतेसर्वत्रअशंकितपरिपतितपुरुषानित्यस्यकर्मतयान्वयः ॥ पातयतिपुरुषानित्यनुषज्जते ॥ मोहल

हाद्विषयेषुपरिपतितान्पुरुषानितितदर्थः ॥ शिरसिपतितःपाषाणइवविवशीकरोतिमूर्छयति ॥ प्रज्ञांविवेकदृष्टिम् ॥ स्थितिंमर्यादाम् ॥ किंबहुनेत्येकोक्त्याप्याह ॥ नतदस्तीति ॥ १४ ॥

क्षणेअंधकारयुक्तकूपे ॥ अंधकूपोनरकविशेषोवा ॥ जर्जरीकरोत्यभिषवेणसोममिवशिथिलीकरोतिपुरुषानित्येव ॥ विषूचिकायदिनचिकित्स्यतेतर्हिहनि

नरकाणांमलमूत्रादीनांनगराणीवशरीराणितेषांनिकरःस्वस्वजनपोष्यवर्गादिसमूहस्तत्रानुरागेणपुरुषमनुबध्नातितच्छीलाविषयलक्षणा ॥ पातःपर्वताग्रेभ्यःपातनं ॥ उपलघनैस्ताडनं ॥ अग्निनादाहः ॥

तरांतत्तद्वक्ष्यमाणंनरकदुर्दशासहस्रंकरोति ॥ १५॥ यत्रशिलाशितापाषाणभक्षकता ॥ असिभिःशातःखंडनं ॥ पातःपर्वताग्रेभ्यःपातनं ॥ उपलघनैस्ताडनं ॥ अग्निनादाहः ॥

विचारवतापुरुषेणसकलमिदमाधिपंजरंसर्पेणत्वचमिवपरिपक्वांसंत्यज्यविगतज्वरेणशीतलांतःकरणेनविनोदादिंद्रजालमिवजग

दखिलमालोक्यतेसम्यग्दर्शनवताअसम्यग्दर्शनवतोहिपरंदुःखमिदम्॥ १३ ॥ विषमोत्यतितरांसंसाररागोभोगीवदशतिअसिरिव

च्छिनत्तिकुंतइववेधयति रज्जुरिवावेष्टयति पावकइवदहति रात्रिरिवांधयतिअशंकितपरिपतितपुरुषान्पाषाणइवविवशीकरोति ह

रतिप्रज्ञांनाशयतिस्थितिंपातयतिमोहांधकूपेतृष्णाजर्जरीकरोति नतदस्तिकिंचिद्दुःखंसंसारीयन्नप्राप्नोति॥१४॥ दुरंतेयंकिलविषय

विषूचिकायदिनचिकित्स्यतेतन्नितरांनरकनगरनिकरफलानुबंधिनीतत्तत्करोति॥ १५॥ यत्रशिलाशितासिशातःपातउपलताडनम

ग्निदाहोहिमावसेकोंगावकर्त्तनंचंदनचर्चातरुवनानिघुणवृत्तांतःपरिवेपोंगपरिमार्जनमनवरतानलविचलितसमरनाराचनिपातो

हिमेनावसेकःसदाआर्द्रता ॥ अंगानामवकर्त्तनंछेदनंकुठारकर्त्तर्यादिभिः॥ चंदनकाष्ठस्येवचर्चाघर्षणंशिलाफलकेषु ॥ असिपत्रतरूणांवनानितेषुधावनमितियावत् ॥ घुणाः

काष्ठांतःकीटकास्तेषामिववृत्तांतःसर्वांगेकाष्ठयंत्रनिपीडनं ॥ परिवेपस्तप्तायःकटकशृंखलाभिःपरितोवेष्टनं ॥ अंगानांकंटकमार्जनीभिःपरिमार्जनंनिस्त्वचनमितियावत्॥ अ

नवरतमनलविचलितान्यग्निज्वालानिःसरणानियेभ्यस्तथाविधानांसमरनाराचानांयुद्धप्रक्षिप्तबाणानांधारावदविच्छेदेननिपतनंनिपातः ॥ निदाघस्यग्रीष्मकालस्यविनोदोति

वाहनं विनैवच्छायापानीयाभ्यामितिशेषः ॥ तथाशिशिरेधारागृहेषुसीकरवर्षणम् ॥ शिरसश्छिन्नप्ररूढस्यपुनःपुनश्छेदः॥सुखनिद्राविषयेतुमूकीकरणंवार्त्तापिनास्तीत्यर्थः॥

आननस्यमुद्रापिधानेननिरुच्छ्वासत्वापादनम्॥ बांधुर्यंनिम्नोन्नतभावोंगानां विसंष्ठुलत्वाद्यवहाराक्षमतेतियावत्॥पर्वतवन्महानुपचयोदेहस्यैकैकांगस्यवेत्यर्थः॥अथवायत्रशि

लाशितादिचतुष्टयंहिमावसेकवत्सोढव्यं ॥ अंगावकर्त्तनंचंदनलेपवत् ॥ तरुवनादित्रयमंगपरिमार्जनवत् देहसंस्कारवत् ॥ विशिष्टशरधारानिपातस्तुनिदाघविनोदनार्थधारा

१ मूलानुरोधेनैतट्टीकायोजनंविचारणीयम्

गृहसीकरवर्षणवत् ॥ शिरश्छेदप्रयुक्तंमरणंसुखनिद्रावत् ॥ मुखपिधानेनबलान्मूकीकरणंचसहजवृत्त्याआननमुद्रावत ॥ वांधुर्यंचमहासंपदुपचयवदवश्यंसोढव्यमित्यर्थः ॥ १६ ॥ दुःखस्थानानामानंत्याद्दिक्प्रदर्शनमात्रमेतदितिप्रदर्श्योपसंहरस्तद्वर्णनस्यप्रकृतोपयोगमाह ॥ तदेवमिति ॥ चलैर्नश्वरैर्देहैर्यंत्रणंयंत्रसंकोचःपरिच्छेदःपारवश्यंचतस्मिन् ॥ एवंवक्ष्यमाणरीत्या ॥ तमेवाह ॥ यथेति ॥ १७॥ ननुकथंशास्त्रविचाराच्छ्रेयोभवतीतिनिश्चयस्तत्पराणामपिमांडव्यादीनांदुर्दशासहस्रदर्शनादित्याशंकांपरिहरन्विचारादृष्टफलतांदर्शयति ॥ अन्यच्चेति ॥ ज्ञानकवचेनावगुंठितशरीराअतएवादुःखार्हाअप्येतेपूर्वोक्तमुन्यादयोऽज्ञवन्मनोवृत्तिपूर्विकांदुःखकरीतांतांसंसारकदर्थनामनुभवंतस्तिष्ठंतीतियदिमन्यसेतर्हितेकथंसततमेवमुदितमनसस्तिष्ठंतीत्येवमन्वयः ॥ मुनयोध्यानपराः ॥ ऋषयोमंत्रजपपराः ॥ विप्राःकर्मपराः ॥ राजानोजनकादयः ॥ १८ ॥ इहहीत्यस्यदेहलीदीपन्यायेनपूर्वोत्तरश्लोकेचान्वयः ॥ तर्हिकीदृशीतेषांस्थितिस्तामाह ॥ विकौतुकाइति ॥ अपूर्वविषयदर्शनोपभोगोत्साहःकौतुकंतद्रहिताः ॥ विकल्पो

निदाघविनोदनं धारागृहसीकरवर्षणं शिरश्छेदः सुखनिद्रामूकीकरणमाननमुद्रावांधुर्यमहानुपचयः ॥ १६ ॥ तदेवंविधकष्टचेष्टासहस्रदारुणेसंसारचलयंत्रेस्मिन्राघवनावहेलनाकर्त्तव्या अवश्यमेवंविचारणीयमेवंचाववोद्धव्यं यथाकिलशास्त्रविचाराच्छ्रेयोभवतीति ॥ १७॥ अन्यच्चरघुकुलेंदोयदिचैतेमहामुनयोमहर्षयश्चविप्राश्चराजानश्चज्ञानकवचेनावगुंठितशरीरास्तेकथमदुःखक्षमाअपिदुःखकरींतांतांवृत्तिपूर्विकांसंसारकदर्थनामनुभवंतःसततमेवमुदितमनसस्तिष्ठंति ॥ १८ ॥ इहहि ॥ विकौतुकाविगतविकल्पविप्लवायथास्थिताहरिहरपद्मजादयः॥ नरोत्तमाःसमधिगतात्मदीपकास्तथास्थिताजगतिविशुद्धबुद्धयः॥ १९॥ परिक्षीणेमोहेविगलतिघनेज्ञानजलदेपरिज्ञातेतत्त्वेसमधिगतआत्मन्यतितते ॥ विचार्यार्यैःसार्द्धंचलितवपुषोवैसदृशतोधियादृष्टेतत्त्वेरमणमटनंजागतमिदम्॥ २० ॥ अन्यच्चराघव ॥ प्रसन्नेचित्तत्त्वेहृदिशमभवेवल्गतिपरेशमाभोगीभूतास्वखिलकलनादृष्टिपुपुरः ॥ समंयातिस्वांतःकरणघटनास्वादितरसंधियादृष्टेतत्त्वेरमणमटनंजागतमिदम्॥ २१ ॥

विप्लवोविक्षेपस्तद्रहिताः ॥ १९ ॥ यदिब्रह्मादिदेववदेतेपूर्णकामास्तर्हिकथतेषांसंसारेप्वटनदर्शनमित्याशंकांपरिहरन्विचारादेर्जीवन्मुक्तिविहरणफलतांदर्शयति ॥ परिक्षीणेइति ॥ आर्यैर्गुर्वादिभिःसार्द्धंविचार्यपदार्थपरिशोधनेसदृशतस्तादात्म्याध्यासप्रसक्तात्मसादृश्याच्चलितान्यनात्मभावेननिरस्तानिवपूंषिस्थूलादिशरीराणियेनतस्याधिकारिण.प्रथमंवाक्यात्तत्त्वेपरिज्ञातेमननेनचअतितते अपरिच्छिन्नेआत्मनिसम्यगसंभावनानिरासेनाधिगते धियानिदिध्यासननिरस्तविपरीतभावनयाबुद्ध्याचतस्यभावस्तत्त्वंब्रह्मभावस्तस्मिन्दृष्टेसाक्षात्कृतेसति मोहेपरिक्षीणेतत्कार्यनिविडभ्रांतिज्ञानमेघेचविगलतिसतीदंजागतमटनंभ्रमणंरमणंक्रीडनमेवनपीडनमित्यर्थः॥२०॥ रमणत्वमेवोपपादयति॥ प्रसन्नेइति ॥ चित्तत्वेचैतन्यमात्रस्वभावेपरमार्थवस्तुनिप्रसन्नेसतिपरेउत्कृष्टेशमभवेशांत्याविर्भावेवल्गतिप्रामेअखिलकलनादृष्टिपुसमस्तबुद्धिवृत्तिपुशमाभोगीभूतासुशांतिरमास्वादरूपामसतीषुस्वांतःकरणघटनाआस्वादितब्रह्मरसंयथास्यात्तथाममैवैपम्यशून्यस्वभावंयातिगच्छति ॥ अतोयुक्तंरमणत्वमित्यर्थः ॥ २१॥

॥ रथइति ॥ स्थाणुश्छिन्नतरुरिवाचेतनोदेहोरथः इंद्रियाणांविषयाभिमुखीगतिस्तुरगाणां
आत्मानंरथिनंविद्धिशरीरंरथमेवत्वित्यादिरूपकदृष्ट्यावारमणमुपपन्नमित्याह ॥ अर्थादिथादिभिर्वहनेनप्रापणेनकलिताःप्रापाआनंदरूपाविषयायेनतथाविधोदेहीआत्मासमाधौपरः
रचनागतिचातुरी परितःस्पंदश्चालनंयेनसप्रमहोवातःप्राणप्रधानंमनः ॥ एवंभूतोहंजगतिविहरामीतिधियापरिमणमेवेत्यर्थः ॥ १५ ॥ ॥ इतिश्रीवासिष्ठमहारा० तात्पर्य
परमात्मैवव्यवहारकालेबुद्ध्युपाधिपरिच्छेदादणुःसूक्ष्मोवारथीतिशेषः ॥ एवंभूतोहंजगतिविहरामीतिशेषः ॥ जीवन्मुक्तिफलोन्नद्धाविशेषेणशमःपुनः ॥ १ ॥ वैराग्यशां
प्रकाशेमुमुक्षुव्यवहारप्रकरणेद्वादशःसर्गः ॥ १२ ॥ ॥ ७ ॥ ॥ वर्णिताइहवाहुल्याद्वैराग्यादिगुणोदयाः ॥ यतःशुभाशुभमुपादातुंहातुंवानवांछंत्यतएवतत्सा
त्यादिसाधनानिवर्णयिष्यन्प्रस्तुतांजीवन्मुक्तिस्थितिमेववर्णयति ॥ एतामिति ॥ अभ्युदिताःसाम्राज्याभ्युदयंप्राप्ताइव ॥१॥

अन्यच्च ॥ रथःस्थाणुर्देहःस्तुरगरचनाचेंद्रियगतिःपरिस्पंदोवातोवहनकलितानंदविषयः ॥ परोणुर्वादेहीजगतिविहरामीत्यनघयाधि
याहृष्टेतत्त्वेरमणमटनंजागतमिदम् ॥ २२ ॥ ॥ इतिश्रीवासिष्ठमहारा० वा० दे० मो० मुमुक्षु० प्रकरणेतत्त्वमाहात्म्यवर्णनंनामद्वादशः
सर्गः ॥ १२ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एतांदृष्टिमवष्टभ्यदृष्टात्मानःसुबुद्धयः ॥ विचरंतीहसंसारेमहांतोभ्युदिताइव ॥ १ ॥ नशोचंतिनवांछं
तिनयाचंतेशुभाशुभम् ॥ सर्वमेवचकुर्वंतिनकुर्वंतीहकिंचन ॥ २ ॥ स्वच्छमेवावतिष्ठंतेस्वच्छंकुर्वंतियांतिहि ॥ हेयोपादेयतापक्षरहिताः
स्वात्मनिस्थिताः ॥ ३ ॥ आयांतिचनचायांतिप्रयांतिचनयांतिच ॥ कुर्वंत्यपिनकुर्वंतिनवदंतिवदंतिच ॥ ४ ॥ येकेचनसमारंभायाश्च
काश्चनदृष्टयः ॥ हेयोपादेयतस्तास्ताःक्षीयंतेधिगतेपदे ॥ ५ ॥ परित्यक्तसमस्तेहंमनोमधुरवृत्तिमत् ॥ सर्वतःसुखमभ्येतिचंद्रबिंबइव
स्थितम् ॥ ६ ॥ अपिनिर्मननारंभमप्यस्ताखिलकौतुकम् ॥ आत्मन्येवनमात्यंतरिंदाविवरसायनम् ॥ ७ ॥ नकरोतींद्रजालानिनानुधा
वतिवासनाम् ॥ बालचापलमुत्सृज्यपूर्वमेवविराजते ॥ ८ ॥ एवंविधाहिवृत्तयआत्मतत्त्वावलोकनाल्लभ्यंतेनान्यथा ॥ ९ ॥ तस्माद्विचा
रेणात्मैवान्वेष्टव्यउपासनीयोज्ञातव्योयावज्जीवंपुरुषेणनेतरदिति ॥ १० ॥

धनानिनयाचंते ॥ २ ॥ असंगात्मदर्शनात्स्वच्छंनिर्लेपम् ॥ कुर्वंति
शास्त्रीयम् ॥ गच्छंतिलौकिकसन्मार्गम् ॥ ३ ॥ आयांतिप्रयांत्यन्यदृशास्वदृशातुन ॥ सचक्षुरचक्षुरिवसकर्णोऽकर्णइवसमनाअमनाइवेत्यादिश्रुतेरितिभावः ॥ ४ ॥ क्षीयंतेप्रयो
जकद्वेषरागयोःक्षयात्तद्विषयसत्यताबुद्धिक्षयाच्चेतिभावः ॥ ५ ॥ ईहाइच्छाचेष्टाच ॥ मधुरवृत्तिःशांतिर्नीलाकारताच ॥ सुखंकर्तृ ॥ मनःकर्म ॥ चंद्रबिंबेस्थितंस्वर्गिणमिव
मनःकर्तृचंद्रबिंबेस्थितमिवेत्युत्प्रेक्षावा ॥ ६ ॥ विषयमननकौतुकयोरेवविक्षेपहेतुत्वात्तदभावेनिर्विक्षेपंसुखमित्यनुषज्यते ॥ सुखात्मतापन्नंमनइत्यर्थः ॥ नमातिनपरिच्छि
द्यते ॥ इंदौपूर्णचंद्रे ॥ रसायनममृतम् ॥ ७ ॥ इंद्रजालानिमायिकविक्षेपान् ॥ वासनांतद्धेतुम् ॥ बालानामिवभ्रांतिप्रसक्तंचापलमुत्सृज्यपूर्वमनादिसिद्धमात्मसुखमेवविराज
ते ॥ ८ ॥ प्रयोजनप्रपंचनस्यप्रस्तुतोपयोगंपुनर्गद्येनोपसंहरति ॥ एवमिति ॥ वृत्तयःस्थितयः ॥ ९ ॥ अन्वेषणंश्रवणमननाभ्यासः ॥ उपासनंनिदिध्यासनम् ॥ १० ॥

एकवाक्यताएकार्थनिष्ठतानिश्चयः ॥ यस्याधिकारिणः ॥ श्रवणादेरभ्यासेन ॥११॥ अवहेलितौशास्त्रतदर्थौयैः ॥ अवज्ञाताउपेक्षितामहांतःपूज्याजनास्तत्त्वज्ञायैः ॥१२॥ ॥ १३॥ दुरधिगमानिशास्त्राणिकथंमौर्ख्यनिवृत्तिःस्यात्तत्राह ॥ किंचिदिति ॥ ईषद्व्युत्पन्नानामपीत्यर्थः ॥१४॥ यथोचितैर्दृष्टांतैः॥ वाक्यार्थःपरमात्मावंधुःप्रियतमोऽत्रश्यंल बधुमिष्टोयस्यतेन श्राव्यमवश्यंश्रोतव्यम् ॥ १५ ॥ तुच्छाअधमाः ॥ १६ ॥ सर्वदुर्दशाहेत्वपेक्षयाएकैकादुर्दशापिवरमित्याहद्वाभ्याम् ॥१७॥ कोटरेष्वेववा ॥ १८॥ मोहोमू

स्वानुभूतेश्चशास्त्रस्यगुरोश्चैवैकवाक्यता॥यस्याभ्यासेनतेनात्मासंततेनावलोक्यते॥११॥अवहेलितशास्त्रार्थैरवज्ञातमहाजनैः॥कष्टमप्यापदंप्राप्तोनमूढैःसमतामियात्॥१२॥नव्याधिर्नविषंनापत्तथानाधिश्चभूतले॥खेदायस्वशरीरस्थंमौर्ख्यमेकंयथानृणाम्॥१३॥ किंचित्संस्कृतवुद्धीनांश्रुतंशास्त्रमिदंयथा ॥ मौर्ख्यापहंतथाशास्त्रमन्यदस्तिनकिंचन॥ १४ ॥इदंश्राव्यंसुखकरंयथादृष्टांतसुंदरम्॥ अविरुद्धमशेषेणशास्त्रंवाक्यार्थवंधुना॥१५॥अपदोयादुरुत्तारायाश्चतुच्छाःकुयोनयः॥तास्तामौर्ख्यात्प्रसूयंतेखदिरादिवकंटकाः॥१६॥ वरंशरावहस्तस्यचांडालागारवीथिषु॥ भिक्षार्थमटनंरामनमौर्ख्यहतजीवितम्॥१७॥वरंघोरांधकूपेषुकोटरेष्वेवभूरुहाम्॥ अंधकीटत्वमेकांतेनमौर्ख्यमतिदुःखदम्॥१८॥इममालोकमासाद्यमोक्षोपायमयंजनः॥अंधतामेतिनपुनःकश्चिन्मोहतमस्यपि॥१९॥ तावन्नयतिसंकोचंतृष्णावैमानवांवुजम्॥ यावद्विवेकसूर्यस्यनोदिताविमलाप्रभा ॥ २० ॥ संसारदुःखमोक्षार्थमादृशैःसहवंधुभिः॥ स्वरूपमात्मनोज्ञात्वागुरुशास्त्रप्रमाणतः॥ २१ ॥ जीवन्मुक्ताश्चरंतीहयथाहरिहरादयः ॥ यथाब्रह्मर्षयश्चान्येतथाविहरराघव ॥ २२ ॥ अनंतानीहदुःखानिसुखंतृणलवोपमम्॥ नातःसुखेषुवध्नीयाद्दृष्टिंदुःखानुवंधिषु ॥ २३॥ यदनंतमनायासंतत्पदंसारसिद्धये॥ साधनीयंप्रयत्नेनपुरुषेणविजानता ॥ २४॥ तएवपुरुषार्थस्यभाजनंपुरुषोत्तमाः॥ अनुत्तमपदालंबिमनोयेषांगतज्वरम्॥२५॥ संभोगाशनमात्रेणराज्यादिषुसुखेषुये॥ संतुष्टादुष्टमनसोविद्धितानंधदर्दुरान् ॥ २६॥ येशठेषुदुरंतेषुदुष्कृतारंभशालिषु॥ द्विषत्सुमित्ररूपेषु भक्तावैभोगभोगिषु॥ २७॥ तेयांतिदुर्गमाद्दुर्गंदुःखाद्दुःखंभयाद्भयम्॥ नरकान्नरकंमूढामोहमंथरवुद्धयः ॥ २८ ॥

र्छात्त्युद्धारतल्लक्षणेपितमसिनांधतामेतिकिमन्यत्रेत्यर्थः ॥ १९ ॥ ननुतृष्णात्यागेउपायंनपश्यामस्तत्राह ॥ तावदिति ॥ मानवमेवांवुजंपद्मम् ॥ २० ॥ ज्ञात्वाविहरेत्युत्तरेणान्वयः ॥ २१ ॥ २२ ॥ दृष्टिमास्थाम ॥ २३ ॥ तदात्मतत्त्वंपश्यतेप्राप्यतेयेनतज्ज्ञानंतत्पदंपरमपुरुषार्थसिद्धयेसाधनीयम् ॥ २४ ॥ नविद्यतेउत्तममुत्कृष्टतममन्यद्यस्मात्तथाविधंपदंवस्तुतदालंबि ॥ २५ ॥ दर्दुरान्भेकान् ॥ सहिकूपस्थोनवहिःपश्यतितद्वाप्यंधश्चेत्सुतरामितिभावः ॥ २६ ॥ शठेषुवंचकेषुदुरंतेषुदुरुच्छेदेषुप्रवलेष्वितियावत् ॥ भक्ताःसक्ताश्चेतेयांतीत्युत्तरेणान्वयः ॥ २७ ॥ दुर्गमात्संकटात् ॥ मंथरवुद्धयोमंदवुद्धयः ॥२८ ॥

केनतर्हितत्प्राप्यतेतत्राह ॥ पुरुषार्थेति ॥ पुरुषार्थःश्रवणमननिदिध्यासनपौरुषंतदेकसाध्येन ॥ द्वैतवासनाविरोधिब्रह्माकारदृढवासनायाएकार्थेनतुल्यविषयेणकर्मणासा ध्येनसाक्षात्कारेणेत्यर्थः ॥ मनोमात्रस्यद्वैतस्यमूलोच्छेदलक्षणेनजयेन ॥ यथाहुः ॥ एवंनिरंतरकृताब्रह्मैवास्मीतिवासना हरत्यविद्याविक्षेपान्रोगानिवरसायनमिति॥४०॥ विवेकोदेहेंद्रियादेरात्मनःपृथक्करणं ॥ विचारश्चश्रवणमनननिदिध्यासनैरसंभावनादिनिरासः एकांतऐकाग्र्यंचताभ्यांनिश्चेतुंशक्यम् ॥ दुःखजालानिविषयान् ॥४१॥ सश्राम पदः ॥ ४२ ॥ संसारेसारत्वेनप्रसिद्धसुखानामुत्कर्षेंद्रनरेषामसाराणांसत्तास्फूर्त्योःसीमांतंपरमावधिम् ॥ सुखस्यआसाराणामिघस्थानीयमवधिमितिवा ॥ एतस्यैवानंदस्या न्यानिभूतानिमात्रामुपजीवंति साकाष्ठासापरागतिरित्यादिश्रुतेरितिभावः ॥ अनुत्तमानिष्पंदाआनंदरसाधिभावाध्यानिनांयस्मात् ॥४३ ॥ ४४ ॥ अनतेसमःसंयोगऐकरस्य

पुरुषार्थैकसाध्येनवासनैकार्यकर्मणा ॥ केवलंतन्मनोमात्रजयेनासाद्यतेपदम् ॥४० ॥ विवेकमात्रसाध्यंतद्विचारैकांतनिश्चयम् ॥त्य
जताद्दुःखजालानिनरेणैतदवाप्यते ॥४१॥ सुखसेव्यासनस्थेनतद्विचारयतास्वयम् ॥ नशोच्यतेपदंप्राप्यनसभूयोहिजायते ॥ ४२॥ त
त्समस्तसुखासारसीमांतंसाधवोविदुः॥ तदनुत्तमनिष्पंदंपरमाहूरसायनम् ॥ ४३ ॥ क्षयित्वात्सर्वभावानांस्वर्गमानुष्ययोर्द्वयोः॥सुखं
नास्त्येवसलिलंमृगतृष्णास्विवैतयोः॥ ४४॥ अतोमनोजयश्चिंत्यःशमसंतोषसाधनः॥ अनंतसमसंयोगस्तस्मादानंदआप्यते॥४५॥
तिष्ठतागच्छताचैवपतताभ्रमतातथा॥ रक्षसादानवेनापिदेवेनपुरुषेणवा ॥ ४६ ॥ मनःप्रशमनोद्भूतंतत्प्राप्यंपरमंसुखम् ॥ विकासि
शमपुष्पस्यविवेकोच्चतरोःफलम् ॥४७॥ व्यवहारपरेणापिकार्यवृंदमविंदता ॥ भानुनेवांबरस्थेननोज्झतेनचवांछ्यते ॥ ४८॥ मनःप्र
शांतमत्यच्छंविश्रांतंविगतभ्रमम् ॥ अनीहंविगताभीष्टंनाभिवांछतिनोज्झति ॥४९॥ मोक्षद्वारेद्वारपालानिमाञ्छृणुयथाक्रमम् ॥ये
षामेकतमासक्त्यामोक्षद्वारंप्रविश्यते॥५० ॥ सुखदोपदशादीर्घासंसारमरुमंडली ॥ जंतोःशीतलतामेतिशीतरश्मेःसमप्रभा ॥ ५१॥

लक्षणः ॥ ४५ ॥ शारीरपरिश्रमोमनुष्याधिकारनियमश्चनास्तीत्याह ॥ तिष्ठतेत्यादिना ॥४६॥ विकासीशमःपुष्पंयस्यउच्चस्योत्कृष्टस्यतरोःकल्पवृक्षस्यफलंपरंसुखम्॥४७॥ ननुतत्प्राप्तमपिपुनर्व्यवहारप्रसक्तावपैष्यतीत्याशंक्याह ॥ व्यवहारेति ॥ नोज्झ्यतेनोत्सृज्यतेपूर्णत्वेनाहेयत्वादतएवनवांछ्यते ॥ ४८ ॥ सतिमनसिकथंनवांछास्यात्तत्राह ॥ मनइति ॥४९॥ प्रागनुक्रांतानपिविस्तरेणवर्ण्यमानान्शृणु॥५०॥तत्रासर्गसमाप्तेःशमंप्रस्तोतुमुपक्रमते ॥सुखेति॥ सुखशब्देनतदाशालक्ष्यते ॥ सैवाध्वगस्यतृपातापसमादो पदशातयादीर्घादुरतिक्रमाशीतलतामेतिशमेनेत्यपकृष्यते ॥ समप्रभाप्रभासमा॥ पदव्यत्यासश्छांदसः॥यथाचंद्रस्यस्वीयाप्रभातद्वत् ॥शीतरश्मिसमप्रभेतिपाठेस्पष्टम्॥५१॥

हियस्माच्छमेनश्रेयआसाद्यतेअतआयुर्घृतमितिवदभेदोपचारात्तत्परमंपदंतद्विष्णोःपरमंपदमितिश्रुतिप्रसिद्धंशमएव ॥ एवंनसन्नचासंश्छिन्नएवकेवलइतिश्रुतिप्रसिद्धःशिवोपि
शमएव ॥ एवंतरतिशोकमात्मविदित्यादिश्रुतिसिद्धासर्वदुःखोपशांतिरपिशमएवेत्यर्थः ॥ ५२ ॥ रागद्वेषाद्यतापितत्वाच्छीतलोनिर्मोहत्वादच्छतरश्चआत्माविज्ञानात्मायस्य
॥ ५३ ॥ आशयश्चित्तम् ॥ ज्ञानलब्धास्वाभाविकशुद्धताशमेनद्विगुणीभवंतीवाभिवर्द्धतइव ॥ यथाक्षीरोदानांशुभ्रताचंद्रोदयेनेत्यर्थः ॥ ५४ ॥ कुशेशयंपद्मम् ॥ हरेःस
माहरिणातुल्याः ॥ हरेर्हृत्पद्मस्यैवबहिर्ब्रह्मासनपद्मतयाद्वैधीभावादितिभावः ॥ ५५ ॥ कुलीनाःसत्कुलास्तएवेंदवःस्वपरकुलोद्योतपापोपशमहेतुत्वात् ॥ विजितेंदवइतिपा

शमेनासाद्यतेश्रेयःशमोहिपरमंपदम् ॥ शमःशिवःशमःशांतिःशमोभ्रांतिनिवारणम् ॥५२॥ पुंसःप्रशमतृप्तस्यशीतलाच्छतरात्मनः ॥
शमभूषितचित्तस्यशत्रुरप्येतिमित्रताम् ॥५३॥ शमचंद्रमसायेषामाशयःसमलंकृतः ॥ क्षीरोदानामिवोदेतितेषांपरमशुद्धता ॥५४॥
हृत्कुशेशयकोशेषुयेषांशमकुशेशयम् ॥ सतांविकसितंतेहिद्वित्पद्माःसमाहरेः ॥५५॥ शमश्रीःशोभतेयेषांमुखेंदावकलंकिते ॥ तेकु
लीनेंदवोवंद्याःसौंदर्यविजितेंद्रियाः ॥५६॥ त्रैलोक्योदरवर्त्तिन्योनानंदायतथाश्रियः ॥ साम्राज्यसंपत्प्रतिमायथाशमविभूतयः ॥५७॥
यानिदुःखानियातृष्णादुःसहायेदुराधयः ॥ तत्सर्वंशांतचेतःसुतमोर्केष्विवनश्यति ॥५८॥ मनोहिसर्वभूतानांप्रसादमधिगच्छति ॥
नतथेंदोर्यथाशांतेजनेजनितकौतुकम् ॥५९॥ शमशालिनिसौहार्दवतिसर्वेषुजंतुषु ॥ सुजनेपरमंतत्त्वंस्वयमेवप्रसीदति ॥६०॥ मा
तरीवपरंयांतिविषमाणिमृदूनिच ॥ विश्वासमिहभूतानिसर्वाणिशमशालिनि ॥६१॥ नरसायनपानेननलक्ष्म्यालिंगनेनच ॥ तथा
सुखमवाप्नोतिशमेनांतर्यथामनः ॥६२॥ सर्वाधिव्याधिचलितंक्रांतंतृष्णावरत्रया ॥ मनःशमामृतासेकैःसमाश्वासयराघव ॥६३॥
यत्करोषियदश्नासिशमशीतलयाधिया ॥ तत्रातिस्वदतेस्वादुनेतरत्तातमानसे ॥६४॥

साम्राज्यसंपत्प्रतिमेवाकारमात्रेणसदृशीयासांनतुगुणांतैरित्यर्थः ॥ ५६ ॥ [illegible]
ठेस्पष्टम् ॥ पाठांतरेतुसौंदर्यैणगुणैर्विजितानिवशीकृतानिपरेषामपिचक्षुर्मनःप्रभृतीनींद्रियाणियैः ॥ ५६ ॥ जनितंकौतुकंस्वात्मानुभवचमत्का[illegible]
॥ ५७ ॥ तत्सर्वमितिनपुंसकमनपुंसकेनेत्येकशेषैकवद्भावः ॥५८॥ इंदोश्चंद्रान्निमित्तभूतात् ॥ विषयस्यापिनिमित्तत्वविवक्षयापंचमी ॥ मृदूनितद्विपरीतानि ॥६१॥ इंद्रपदेअमृतरसा[illegible]
यस्मिंस्तथाभूतंसद्यथाप्रसादमधिगच्छतीतिसंबंधः ॥ ५९ ॥ स्वयमेवेत्यनायासोक्तिः ॥६०॥ विषमाणिक्रूरकुटिलाशयानि ॥ स्वादुमधुरंयथास्यात्तथात[illegible]
नपानेन ॥ विष्णुपदेलक्ष्म्यालिंगनेन ॥ ६२ ॥ चलितंभीषणेनकंपितम् ॥ वरत्रयाचर्मरज्वाक्रांतमितस्ततआकृष्टंश्रांतमितियावत् ॥ ६३ ॥
मानसेऽतिस्वदतेरोचते ॥ ६४ ॥

१ एतट्टीकानुरोधेनमूलस्थःपाठस्तृतीयोपेक्षितःसक्वापिनोपलब्धः

निर्वृतिसुखम् ॥ तयानिर्वृत्या ॥ रोहंतिपुनःप्रादुर्भवंति ॥ मन्येइत्युत्प्रेक्षा ॥ ६५ ॥ ६६ ॥ सुसन्नद्धानिसम्यग्गुप्तानिसमस्तान्यंगानियस्यतम् ॥ अमृतरूपेणवर्मणाकवचेन ॥ वेधयंतिपीडयंति ॥ दुःखानिदुःखनिमित्तानि ॥ ६७ ॥ यथापुरुषइतिशेषः ॥ ६८ ॥ जनस्तांतुष्टिमेतीत्यर्थः ॥ शमयुक्तःआशयोयस्यतम् ॥ ६९ ॥ जीवतिसफलजीवनो भवति ॥ ७० ॥ अनुद्धतंविनीतंमनोयस्य ॥ साधुःशांतोयत्प्रमादादपराधमपीतियावत् ॥ ७१ ॥ इदानींदांभिकसात्विकपरीक्षणायशांतलक्षणान्याह ॥ श्रुत्वेत्यादिना ॥ शुभाशुभंप्रियाप्रियम् ॥ ७२ ॥ भाविसुखादिनकांक्षतिप्रारब्धप्रापितंचनोज्झति ॥ ७३ ॥ आर्जवमपितल्लक्षणमित्याह ॥ स्वच्छेति ॥ स्वच्छाज्ञात्वापिपरकौटिल्यादीनीतिशे

शमामृतरसाच्छन्नंमनोयामेतिनिर्वृतिम् ॥ छिन्नान्यपितयांगानिमन्येरोहंतिराघव ॥ ६५ ॥ नपिशाचानरक्षांसिनदैत्यानचशत्रवः ॥ नचव्याघ्रभुजंगावाद्विषंतिशमशालिनम् ॥ ६६ ॥ सुसन्नद्धसमस्तांगंप्रशमामृतवर्मणा ॥ वेधयंतिनदुःखानिशरावज्रशिलामिव ॥ ६७ ॥ नतथाशोभतेराजाअप्यंतःपुरसंस्थितः ॥ समयास्वच्छयाबुद्ध्यायथोपशमशीलया ॥ ६८ ॥ प्राणात्प्रियतरंदृष्ट्वातुष्टिमेतिन वैजनः ॥ यामायातिजनःशांतिमवलोक्यशमाशयम् ॥ ६९ ॥ समयाशमशालिन्यावृत्त्यायःसाधुवर्त्तते ॥ अभिनंदितयालोकेजीवतीह सनेतरः ॥ ७० ॥ अनुद्धतमनाःशांतःसाधुःकर्मकरोतियत् ॥ तत्सर्वमभिनंदंतितस्येमाभूतजातयः ॥ ७१ ॥ श्रुत्वास्पृष्ट्वाचदृष्ट्वाचभुक्त्वा स्नात्वाशुभाशुभम् ॥ नहृष्यतिग्लायतियःसशांतइतिकथ्यते ॥ ७२ ॥ यःसमःसर्वभूतेषुभाविकांक्षतिनोज्झति ॥ जित्वेंद्रियाणियत्नेन सशांतइतिकथ्यते ॥ ७३ ॥ स्वच्छावदातयाबुद्ध्यायथैवांतस्तथावहिः ॥ दृश्यंतेयत्रकार्याणिसशांतइतिकथ्यते ॥ ७४ ॥ तुषारकरबिंबाभंमनोयस्यनिराकुलम् ॥ मरणोत्सवयुद्धेषुसशांतइतिकथ्यते ॥ ७५ ॥ स्थितोपिनस्थितइवनहृष्यतिनकुप्यति ॥ यःसुषुप्तसमःस्वस्थः सशांतइतिकथ्यते ॥ ७६ ॥ अमृतस्यंदसुभगायस्यसर्वजनंप्रति ॥ दृष्टिःप्रसरतिप्रीतासशांतइतिकथ्यते ॥ ७७ ॥ योंतःशीतलतांयातो योभावेपुनमज्जति ॥ व्यवहारीनसंमूढःसशांतइतिकथ्यते ॥ ७८ ॥ अप्यापत्सुदुरंतासुकल्पांतेषुमहत्स्वपि ॥ तुच्छेहंनमनोयस्यसशांत इतिकथ्यते ॥ ७९ ॥ आकाशसदृशीयस्यपुंसःसंव्यवहारिणः ॥ कलंकमेतिनमतिःसशांतइतिकथ्यते ॥ ८० ॥

षः ॥ मोक्षोपायतयाकर्तव्यानिकार्याणि ॥ ७४ ॥ मरणोत्सवयुद्धेषुभयरागक्रोधैर्निराकुलमसंतममतएवतुषारकरश्चंद्रस्तद्बिंबाभम् ॥ ७५ ॥ हर्षकोपनिमित्तवत्प्रदेशेस्थितोपि ॥ ७६ ॥ अमृतस्यंदोःमृतप्रवाहइवसुभगासुखदा ॥ ७७ ॥ भावेषुविषयेषुव्यवहारीसन्नपिनमज्जतिनासज्जते ॥ ७८ ॥ महत्सुचिरकालिकेषु ॥ तुच्छेमिथ्याभूतेनश्वरेदे नाहंमम्याहमितिमनोनास्ति ॥ ७९ ॥ परमाकाशेनब्रह्मणासदृशीसमरसाधर्सिद्धाकाशवदविकारीवा ॥ कलंकंरागादिलेपम ॥ ८० ॥

लोकेपिसर्वगुणश्रैष्ठ्येनशमःप्रसिद्धइत्याह॥ तपःस्विष्विति ॥ ८१ ॥८२॥ गुणानांपूगानासमूहानांसीमांतोवधिः ॥ एकांतभूषणंमुख्यभूषणम् ॥ श्रीमान्सर्वगुण...
मोविराजते ॥ ८३ ॥ अहार्यैःपरैरपहर्तुमशक्यमार्यैःपूज्यैर्गुप्तंसावधानतयारक्षितंपरमुत्कृष्टंसाधनमवलंब्यमहानुभावायथायेनक्रमेणपरंपदंप्रयाताःप्राप्तास्तमेनंक्रममनुपाल
यअवलंब्यरक्षस्वेत्यर्थः ॥ ८४ ॥ ॥ इतिश्रीवासिष्ठमहारा०तात्पर्यप्रकाशेमुमुक्षुव्यवहारप्रकरणेत्रयोदशःसर्गः ॥ १३ ॥ ॥ ७ ॥ ॥ साधुसंगमसच्छास्त्रभाव
शुद्ध्युपबृंहितः ॥ शमसंतोषयोर्हेतुर्विचारोत्रप्रशस्यते ॥ १ ॥ इत्थंमोक्षद्वारपालंशमाख्यमाद्यमुपवर्ण्यद्वितीयंविचारंवर्णयिष्यन्वसिष्ठउवाच ॥ शास्त्रेति ॥ तत्रार्थानर्थानुबं
धविचारःसारासारविचारोहेयोपादेयविचारःप्रमाणतात्पर्यविचारआत्मतत्त्वपरीक्षाचेतिविचारःपंचविधः ॥ तत्रस्वाभाविकप्रवृत्तेर्विषयाणांचानर्थानुबंधिताशास्त्रीयप्रवृत्ते
र्वैराग्यादेश्चपुरुषार्थानुबंधितेत्यन्वयव्यतिरेकादिनापरीक्षात्मकआद्यः ॥ स्त्रीपुत्रस्वदेहादिषुस्वतोवीजतःपरिणामतश्चाशुचिविण्मूत्राद्यमंगलत्वपरीक्षात्माब्रह्मलोकांतसुखाना

**तपःस्विषुबहुज्ञेषुयाजकेषुनृपेषुच ॥ वलवत्सुगुणाढ्येषुशमवानेवराजते॥ ८१ ॥ शमसंसक्तमनसांमहतांगुणशालिनाम् ॥ उदेतिनि**
**र्वृतिश्चित्ताज्ज्योत्स्नेवसितरोचिषः ॥ ८२ ॥ सीमांतोगुणपूगानांपौरुषैकांतभूषणम् ॥ संकटेषुभयस्थानेशमःश्रीमान्विराजते ॥ ८३ ॥**
**शममृतमहार्यमार्यगुप्तंपरमवलंब्यपरंपदंप्रयाताः ॥ रघुतनययथामहानुभावाःक्रममनुपालयसिद्धयेतमेव ॥ ८४ ॥ ॥ इतिश्रीवा**
**सिष्ठमहारामायणेवा०दे०मो०मुमुक्षुव्यवहारप्रकरणेशमनिरूपणंनामत्रयोदशःसर्गः ॥ १३ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥**
**शास्त्रावबोधामलयाधियापरमपूतया ॥ कर्त्तव्यःकारणज्ञेनविचारोनिशमात्मनः ॥ १ ॥**

मनित्यत्वदुःखसंभिन्नत्वादिपरीक्षात्माचद्वितीयः ॥ एतौवैराग्यमुमुक्षाहेतू ॥ मुमुक्षोत्तरमपिमोक्षसाधनंकर्मवोपासनमेव तेअपिकिंसमुच्चितेउतज्ञानसमुच्चितेउतज्ञानमेवेति
परीक्षात्मातृतीयः ॥ यदापिज्ञानमेवतदापितत्किंसांख्यवैशेषिकाद्यभिमतंकपिलगौतमोक्ततच्छास्त्रप्रमाणकंश्रौतमेववा ॥ यदापिश्रौतंतदापिकिंश्रुतीनांद्वैतेउताद्वैतेसविशेषे
उतनिर्विशेषेआत्मन्यनात्मनिवातात्पर्यमितिपरीक्षात्माचतुर्थः ॥ सचश्रवणमित्युच्यते ॥ श्रुत्यादिप्रमाणानामप्यद्वितीयेसच्चिदानंदब्रह्मात्मनितात्पर्यावधारणेपिस्वात्मनिपरमा
र्थतस्तथात्वंसंभवतिनवेतिरत्नपरीक्षान्यायेनानुभवनिष्ठगुरुसतीर्थ्यादिसंवादेनजीवेश्वरजगत्तत्त्वपरिशोधनेनचयावदवधारणंपरीक्षणात्मापंचमः ॥ तत्राद्यानांत्रयाणांफलंसा
धनचतुष्टयसंपत्तिरंत्ययोस्तुक्रमात्प्रमाणप्रमेयासंभावनानिवृत्तिस्तत्राद्यायद्यपिभाग्यवशतःस्वतोपिचभवंतितथापिस्वप्रत्ययदृढीकारायपुनर्गुरुशास्त्रपुरःसरंकर्त्तव्याः ॥ अं
त्यौतुगुरुशास्त्राभ्यामेवभवतइतिसर्वसाधारण्येनशास्त्रावबोधामलयाधियेत्युक्तम् ॥ कारणज्ञेनविषयविशयपूर्वपक्षसिद्धांतप्रयोजनविभागज्ञानवतापुंसाप्रमाणप्रमेयतत्त्वप्रति
पादनोपायकुशलेनगुरुणासहेतिवार्थः ॥ तत्रचित्तशुद्धेरप्युपयोगंदर्शयति ॥ परमपूतयेति ॥ १ ॥

१ संशयः

तीक्ष्णतांसूक्ष्मतत्त्वावगाहनकुशलताम् ॥ २ ॥ आपदेवदुरुत्तरत्वाद्वनम् ॥ अनंताभिरीहाभिःप्रवृत्तिभिःपरितःपल्लवितेवरागादिभिर्विवृद्धाआकृतिःसन्निवेशोयस्य ॥ क्रकचं काष्ठदारणम् ॥ ३ ॥ बंधुनाशादिपुदुःखस्थानेपुयदुचितंकर्त्तव्ययेनचोपायेनदुःखोत्तरणंचित्तसमाधानंचतत्सर्वंमोहेनवैचित्त्येनव्यामनस्फुरतीतियावत् ॥ तत्रविचारएवगतिस्तत्प्रतिसंधानेहेतुरित्यर्थः ॥ ४ ॥ तदेवाह ॥ नेति ॥ ५ ॥ तेजःसामर्थ्यम् ॥ प्रतिपत्तिस्तत्तत्कालोचितास्फूर्तिः ॥ क्रियातदनुष्ठानंतत्फलंच ॥ फलंतिनिष्पद्यंतेसफलीभवंतिवा ॥ ६ ॥ युक्तमुचितमुपादेयमयुक्तमनुचितंहेयंतयोःप्रकाशनेमहादीपम् ॥ स्फारमनल्पम् ॥ ७ ॥ आलूनानिहृदयस्थानिविवेकांभोजानियैस्तान् ॥ शुद्धात्माजल्पच्छल

विचारात्तीक्ष्णतामेत्यधीःपश्यतिपरंपदम् ॥ दीर्घसंसाररोगस्यविचारोहिमहौषधम् ॥ २ ॥ आपद्वनमनंतेहापरिपल्लविताकृति ॥ विचारक्रकचच्छिन्नंनैवभूयःप्ररोहति ॥ ३ ॥ मोहेनबंधुनाशेपुसंकटेपुशमेपुच ॥ सर्वंव्याप्तंमहाप्राज्ञविचारोहिसतांगतिः ॥ ४ ॥ नविचारंविनाकश्चिदुपायोस्तिविपश्चिताम् ॥ विचारादशुभंत्यक्त्वाशुभमायातिधीःसताम् ॥ ५ ॥ बलंबुद्धिश्चतेजश्चप्रतिपत्तिःक्रियाफलम् ॥ फलंत्येतानिसर्वाणिविचारेणैवधीमताम् ॥ ६ ॥ युक्तायुक्तमहादीपमभिवांछितसाधकम् ॥ स्फारंविचारमाश्रित्यसंसारजलधिंतरेत् ॥ ७ ॥ आलूनहृदयांभोजान्महामोहमतंगजान् ॥ विदारयतिशुद्धात्माविचारोनामकेसरी ॥ ८ ॥ मूढाःकालवशेनेहयद्गताःपरमंपदम् ॥ तद्विचारप्रदीपस्यविजृंभितमनुत्तमम् ॥ ९ ॥ राज्यानिसंपदःस्फाराभोगोमोक्षश्चशाश्वतः ॥ विचारकल्पवृक्षस्यफलान्येतानिराघव ॥ १० ॥ याविवेकविकासिन्योमतयोमहतामिह ॥ नताविपदिमज्जंतितुंबकानीववारिणि ॥ ११ ॥ विचारोदयकारिण्याधियाव्यवहरंतिये ॥ फलानामत्युदाराणांभाजनंहिभवंतिते ॥ १२ ॥ मूर्खहृत्काननस्थानामाशाप्रथमरोधिनाम् ॥ अविचारकरंजानांमंजर्योदुःखरीतयः ॥ १३ ॥ कज्जलक्षोदमलिनामदिरामदधर्मिणी ॥ अविचारमयीनिद्रायातुतेराघवक्षयम् ॥ १४ ॥ महापदतिदीर्घेपुसद्विचारपरोनरः ॥ ननिमज्जतिमोहेपुतेजोराशिस्तमःस्विव ॥ १५ ॥

जाल्पादिदोपशून्यः ॥ ८ ॥ मूढास्तरणोपायमार्गव्यामूढाः ॥ विजृंभितंतादृशमार्गप्रकाशनस्यफलम् ॥ ९ ॥ १० ॥ विवेकोयविचारस्तेनविकासिन्योयामतयस्तानमज्जंतिनविषीदंति ॥ तुंबकानिशुष्कालाबुकानि ॥ ११ ॥ विचारवतीधीर्विवेकोदयकारिणीतयायेव्यवहरंति ॥ उदाराणांश्रेष्ठानाम ॥ १२ ॥ मूर्खाणांहृन्मनएवकाननंवनंतत्रस्थानाम् ॥ पुरुपार्थविपयेआशांमुमुक्षांप्रथमंरुधंतितच्छीलानाम ॥ करंजानांकुबेराक्षवल्लीनाम ॥ तत्पक्षेआशादिशः ॥ तेहिवृत्तिभावेनदिशोरुंधंति ॥ मंजर्यःफलकोशमंजर्योदुःखव्यवहाराडंबरभूतास्ताहिसकटका.कटुकफलगर्भा प्रसिद्धा ॥ १३ ॥ क्षोदश्चूर्णमिवमलिना ॥ मदिरामदधर्माभ्रांतिस्खलनादयस्तद्वती ॥ क्षययातुविचारेणेतिशेपः ॥ १४ ॥
म [illegible] अज्ञानेषु ॥ तेजोराशिः सूर्यः ॥ १५ ॥

मानसंमनएवसरस्तदेवहिमवत्कुक्षौप्रसिद्धंमानसंसरः ॥ शैत्यौन्नत्यस्थैर्यादिगुणैर्हिमवानिव ॥ १६ ॥ मांद्यंमौर्ख्यम् ॥ चंद्रदेवत्यचंद्रवद्विवेकप्रकाशयोग्येचमनसिचांद्रिकास दृशज्ञानसुखाविर्भावएवोचितस्तस्माद्यस्यमूर्खस्यशोकदुःखाद्युद्भवस्तस्यचंद्रादप्यशनिर्वज्रमुदेति ॥ यथाशिशोर्बालस्यमौर्ख्याद्यक्षःप्रागुक्तवेतालउदेतितद्वत् ॥ १७ ॥ नि विवेकोनराधमोदुःखबीजानामेवनिरंतरभरणायनिर्मितंखंडकंभूकुसूलम् ॥ नविद्यतेस्थूलंयस्मात्तथाविधमतिस्थूलमित्यर्थः ॥ विपल्लक्षणानांनवलतानांमधुर्वसंतउल्लासहेतु रित्यर्थः ॥ १८ ॥ दुरारंभाःस्वपरदुःखानुकूलकर्माणि ॥ दुराचारानिषिद्धाचरणानि ॥ भ्रांतिआविर्भवंति ॥ १९ ॥ एकांतेननियमेनवनद्रुमसमानधर्माणम् ॥ एकांतेमनुष्या सेव्यस्थानेवाविद्यमानेनवनद्रुमेणसधर्माणम् ॥ अतएवसाधूनामध्वगानांछायाश्रयदानादिकार्येषुसाधुषुपुरुषार्थोपयोगिषुकार्येषुवाऽक्षममसमर्थम् ॥ २० ॥ विविक्तंविचार

विचारविकलायस्यमतिर्मांद्यमुपेयुषः ॥ त

मानसेसरसिस्वच्छेविचारकमलोत्करः ॥ नूनंविकसितोयस्यहिमवानिवभातिसः ॥ १६ ॥ विचारविकलायस्यमतिर्मांद्यमुपेयुषः ॥ तस्योदेत्यशनिश्चंद्रान्मुधायक्षःशिशोरिव ॥ १७ ॥ दुःखखंडकमस्थूलंविपन्नवलतामधुः ॥ रामदूरेपरित्याज्योनिर्विवेकोनराधमः ॥ १८ ॥ अक्षयेकंचनदुरारंभादुराचारादुराधयः ॥ अविचारेणतेभ्रांतिवेतालास्तमसायथा ॥ १९ ॥ अविचारिणमेकांतवनद्रुमसधर्मकम् ॥ अक्षमंसाधुकार्येषुदूरेकुरुरघूद्वह ॥ २० ॥ विविक्तंहिमनोजंतोराशावैवश्यवर्जितम् ॥ परांनिर्वृतिमभ्येतिपूर्णचंद्रइवात्मनि ॥ २१ ॥ विवेकितोदितादेहेसर्वंशीतलयत्यलम् ॥ अलंकरोतिचात्यंतंज्योत्स्नेवभुवनंयथा ॥ २२ ॥ परमार्थपताकायाधियोधवलचामरम् ॥ विचारोराजतेजंतोरजन्यामिवचंद्रमाः ॥ २३ ॥ विचारचारवोजीवाभासयंतोदिशोदश ॥ भ्रांतिभास्करवन्नूनंभूयोभवभयापहाः ॥ २४ ॥ बालस्यस्वमनोमोहकल्पितःप्राणहारकः ॥ रात्रौनभसिवेतालोविचारेणविलीयते ॥ २५ ॥ सर्वएवजगद्भावाअविचारेणचारवः ॥ अविद्यमानसद्भावाविचारविशरारवः ॥ २६ ॥

वत् ॥ आशायाविवश्येनपारवश्येनवर्जितम् ॥ निर्वृतिंविश्रांतिसुखम् ॥ २१ ॥ ज्योत्स्नाचंद्रिकेव ॥ भुवनंजलंयथातापार्त्तंसर्वजनंशीतलयतितृषार्त्तंचअलंतृप्तंकरोतितद्वत् ॥ २२ ॥ जंतोरधिकारिजन्मवतःपुरुषस्यपरमार्थस्योत्कृष्टपुरुषार्थलक्षणराजभावप्राप्तेःसूचकत्वात्पताकायाधियःशुद्धबुद्धेःसंबंधिविचारोधवलचामरमिवासाधारणंराजते ॥ २२ ॥ रूपितपताकाचामरयोरजनीचंद्रमसावुपमाने ॥ तत्ररजन्यावैयधिकरण्येनोपमानत्वं ॥ २३ ॥ जीवाविचारेणैवकमाच्चारवोजीवन्मुक्तभूताःसंतोभूयसांप्राणिनां विचारप्रकाशेनभवभयलक्षणंतमोपघ्नंतोभास्करवद्भांति ॥ २४ ॥ ननुविचारेणभयनिवृत्तिःक्वदृष्टातत्राह ॥ बालस्येति ॥ निशिवहिर्गमनप्रतिबंधार्थंकल्पितोवेतालस्तथा सारोविलीयते ॥ २५ ॥ अस्तुतत्रतथाप्रकृतेकथंभयनिवृत्तिरित्याशंक्यभयहेतोर्जगतोविचारेणमिथ्यात्वनिर्णयादित्याह ॥ सर्वएवेति ॥ चारवःसत्यवद्रमणीयाः ॥ विशरारवः शिलास्फालितलोष्टादिवद्विशरणशीलाअसारामिथ्याभूताइतियावत् ॥ २६ ॥

एञ्छिकममद्मयेप्यनयोर्नविरोधः फलतऐक्यव्याप्त्यादित्याशयेनाह ॥ द्वाभ्यामिति ॥ ७२ ॥ रागाविशेषप्रश्रयपत्येवर्णितमद्वयसफलनाम्यस्मिन्मित्याह ॥ कुर्वित्यादिना ॥ रागा
विसयमवप्रधानफलं स्तौति ॥ यत्किंचिदिति॥७४॥७५॥ ७६ ॥ पदस्थितिम् ॥ ७७ ॥ किंनामकु स्वफलमितिशेषः ॥ शास्त्रशालिनोपिमूर्खेतिशेषः ॥ ७८ ॥ तेजना ॥ ते
अरण्यप्रसिद्धामशुका ॥ एवार्थवैराग्य ॥ रागद्वेषकमप्रमूलमाह॥ मद्धनमिति॥ अम्यत अम्यस्मादवस्थपाप्तधनममादास्यकम् ॥ ७९॥ इतिवृत्यलब्धनष्टधनादिविषयेऽभ
मिनिवेशाभावप्रदर्शनार्थंधवधनाविसम्यवहारेहालक्षणारागद्वेषयोःक्रमा केनुरुच्छाइत्यय ॥ कुलसुच्छालमाह ॥धनानीत्यादिना ॥८०॥ प्रियविषयभावेनअप्रियाभावेनचराग

यदेकमेतयोर्नेस्तिरम्यतत्रामसश्रय॥ द्वाभ्यामेवायवैताभ्यांदर्शनाभ्यामिहानघ ॥ ७३ ॥ विहरन्कुरुकल्याणरागद्वेषपरिक्षयम्॥ य
त्किंचिदुदितलोकेयन्नभस्यथवादिवि ॥ ७४॥ तत्सर्वंप्राप्यतेरामरागद्वेषपरिक्षयात्॥ रागादिहतयाबुद्ध्यायादृग्रामविचेष्टितम्॥ ७५॥
तत्तदेवप्रयात्याशुमूढानांविपरीतताम्॥ द्वेषदोषोर्मिरुद्धासुनगुणाश्चित्तवृत्तिषु ॥ ७६ ॥ पदंकुर्वंतिदग्धासुस्थलीषुहरिणाइव॥ रागोद्वे
पश्वसर्पौद्वौनविलीनौमनोबिले॥ ७७॥यस्यकल्पतरोस्तस्मात्किंनामांगनलभ्यते॥येहिप्राज्ञा स्वनियताविदग्धाःशास्त्रशालिन ॥७८॥
रागद्वेषमयास्तेवैजम्बुकास्तेधिगस्तुतान्॥ मद्धनमुक्तमन्येनधनत्यक्तमयान्यत ॥ ७९ ॥ इतिसव्यवहारेहा केरागद्वेषयोःक्रमा ॥ धना
निपधवोमित्रपुनरायांतियांतिच ॥ ८० ॥ किमेतपुनर प्राज्ञोरज्यतेवाविरज्यते॥ भावाभावभवाभोगा माययपारमेश्वरी ॥ ८१ ॥स
साररचनामर्वामसक्तपातयत्यलम्॥ नधननजनानात्मासत्यराघववस्तुत ॥ ८२ ॥ मिथ्यैवमिथ्यावसितमितीदपरिलक्ष्यते॥ आद्य
तयो सवममन्मध्येप्यस्थिरमाधिमत्॥ ८३॥ क्वभ्रातिर्रतिप्राज्ञोत्थन्यकल्पितखद्रुमे॥ एकेनकल्पितास्वस्त्रीभुक्तेतादूरगोपर ॥ ८४ ॥
इतीयमगमसाररचनातेनमाश्रम ॥ भूताजवंजवीभावमिममाततमाकुलम् ॥ ८५ ॥ गधर्वपुरनिर्माणविलासेनसमविद्धु ॥ स्वप्न
मकल्पपुरवदसदवेदमुत्थितम्॥ ८६ ॥ सर्वत्रसस्यमेवेदसुप्तमिवविच्युतम्॥ परिपश्यसिससारदीर्घस्वप्नपुरद्रुमम् ॥ ८७ ॥ अज्ञान
निद्रालुठनस्वभावात्मकमच्युतम्॥ ससारस्वप्नसभ्रांतोभवानयमिहस्थित ॥८८॥ तदेनांवितता निद्राघनाज्ञानमयात्मिकाम्॥ त्यजा
लक्ष्मीमिवावाप्तनिधान पुरुषोत्तम ॥८०॥

स्याभोगायम्याम् ॥ ८१ ॥ ससक्तलपटम् ॥८२ ॥ इतिवक्ष्यमाणयुक्त्यामिथ्येत्यवसितमिथ्यैवपरिलक्ष्यते ॥ तांयुक्तिमाह ॥ आद्यतयोरिति ॥आद्यतयो पूर्वोत्तरकालयो ॥
अस्थिरमुत्तरोत्तरभावविकारपत्तम् ॥ ८३ ॥ तुच्छेसंसारइतिवधयोम्यत्वेदृष्टांतमाह ॥ अम्येत्यादिना ॥ ८४ ॥ ८५ ॥ विद्धु माश्रा ॥ ८६ ॥ कल्पनाया सर्वमसद्भावावधिना
नचिरसद्भावाद्यमसत्यसस्थम ॥ विच्युतस्वभावविभावापन्नंसुप्तमिव ॥८७॥ अच्युतमअज्ञानुस्यूतम पूर्णाम्वयि ॥ भवाग्रुभवास्वप्नोनिद्रास्पअस्यूसराम्वयि ॥ ८८ ॥ ८९ ॥

१ प्राज्ञाविनियतादिर्मितिपाठ

चिदाभासंचित्प्रकाशम् ॥ १० ॥ ११ ॥ मयामेघस्थानीयेन ॥ सुशब्दपदंश्लेषाद्गर्जनमप्याह ॥ १२ ॥ अथैवप्रकृष्टोबोधोयस्यतथाविधःसन्सत्यंस्वतत्त्वमालोकय ॥ १३ ॥ ॥ १४ ॥ उपसहरति ॥ परिगलितेति ॥ सुसारसुषुप्तमिवसौम्यानिर्विक्षेपादृष्टिर्यस्यतथाविधस्त्वइदंनित्यापरोक्षमतिविततब्रह्मैवासिअतःसुशुद्धयेसमुपशमात्मनितस्मिन्नेवसमाहितस्तिष्ठेत्यर्थ ॥ १५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू०अष्टाविंशःसर्गः ॥ २८ ॥ ॥ ७ ॥ ॥ रामस्यत्रोधाद्विश्रांतिःपुनरुक्तार्थविस्तर ॥ कैलासेशाकूशिवेनेत्थस्वोपदेशश्चकीर्त्यते ॥ १ ॥ इत्थसानुमहश्रीवसिष्ठेनोपदेशाचमत्कारे प्रतिबोधितस्यश्रीरामस्यअन्येषांचश्रोतॄणांतत्त्वसाक्षात्कारोदयेनमुहूर्तार्धस्वरू

प्रबोधमेहिपश्यस्वमात्मानमुदितंसदा॥ निर्विकल्पंचिदाभासंप्रातःपद्मंरविंयथा ॥ १० ॥ प्रबुद्ध्यस्वप्रबुद्ध्यस्वपुनःपुनरयंमया॥ प्रबोद्ध्यसेमहाबाहोपश्यात्मार्कमनामयम्॥११॥ मयैतेनाभिवृष्टेनशीतेनज्ञानवारिणा॥ सुशब्दशालिनारामत्वमनेनैवासिबोधितः॥१२॥ बोधमासादयपरंप्रबोधोद्यैवराघव॥ सत्यमालोकयालीकंत्यक्त्वेमंजागतंभ्रमम् ॥ १३ ॥ नतेजन्मनतेदुःखंनदोषास्तेनतेभ्रमाः॥ सर्वसंकल्पमुत्सृज्यतिष्ठात्मनिसुसंस्थितः॥१४॥ परिगलितविकल्पदोपजालस्त्वमसिसुसारसुषुप्तसौम्यदृष्टिः॥ अतिविततमिदंसुशुद्धयेत्वंसमुपशमात्मनितिष्ठहेमहात्मन्॥१५॥ ॥इत्यार्षेवा०वा०दे०मो०नि०पू०परमार्थयोगोपदेशोनामाष्टाविंशतितमःसर्गः॥ २८॥ श्रीवाल्मीकिरुवाच॥ ॥इत्याकर्णयतिस्वस्थसमचेतसिराघवे॥ विश्रांतेस्वात्मनिस्वैरंपरमानंदमागते॥ १॥ तत्रस्थेपुचसर्वेपुतेपूपशमशालिषु॥ राघवस्यात्मविश्रांतेःस्थित्यर्थंवचनामृतम् ॥ २॥ विरराममुनेर्वारिसस्येष्वंबुधरादिव॥ अथयातेमुहूर्तार्धेराघवेप्रतिबोधिते॥ ३॥ पुनराहतमेवार्थंवसिष्ठोवदतांवरः॥ ॥श्रीवसिष्ठउवाच॥ ॥रामसम्यक्प्रबुद्धोसिस्वात्मानमसिलब्धवान्॥ ४॥ एवमेवावलंब्यार्थंतिष्ठनेहपदंकुरुथाः॥ इदंसंसारचक्रंहिनाभौसंकल्पमात्रके॥५॥ संरोधितायांवहनाद्रघुनंदनरुध्यते॥ क्षोभितायांमनोनाभ्यामिदंसंसारचक्रकम् ॥६ ॥ प्रयत्नाद्रोधितमपिप्रवहत्येववेगतः ॥ परंपौरुपमास्थायबलंप्रज्ञांचयुक्तितः ॥ ७॥ नाभिंसंसारचक्रस्यचित्तमेवनिरोधयेत्॥ प्रज्ञासौजन्ययुक्तेनशास्त्रसंवलितेनच॥८॥ पौरुषेणनयत्प्राप्तंनतत्क्वचनलभ्यते॥ दैवैकपरतांत्यक्त्वाबालबोधोपकल्पिताम् ॥ ९॥ निजंप्रयत्नमाश्रित्यचित्तमादौनिरोधयेत् ॥ आविरिंचात्प्रवृत्तेनभ्रमेणाज्ञानरूपिणा॥ १० ॥

पविश्रांतिसमाधिनानिष्कंपस्थितिश्रीवाल्मीकिरुवाच ॥ इत्याकर्णयतीत्यादिसार्धेन॥१॥तत्रस्थेपुस्वात्मनिविश्रांतेष्विति विभक्तिविपरिणामेनयोज्यम ॥ मुनेर्वचनामृतविररामेतिपरेणान्वयः ॥ २ ॥ यथावृष्टितर्पितेषुसस्येषुअंबुधराद्वारिविरमतितद्वद्बोधितेसमाधेर्व्युत्थापितेअर्थाद्वसिष्ठेनैवेतिगम्यते ॥ ३ ॥ पुनस्तमेवार्थंदृढीकारायाहेत्यर्थः ॥ ४ ॥ अर्थंपरमार्थमात्मतत्त्वम् ॥ इहसंसारेपदस्थितिमाकुथाः ॥ तत्रोपायमाह ॥ इदमिति ॥ ५ ॥ क्षोभितायारागद्वेपादिनाविक्षेपप्रापितायाम् ॥ ६ ॥ पौरुपअभ्यासवैराग्यदार्ढ्यलक्षणम् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

॥ २९ ॥ तत्रस्थेनमिथ्याज्ञानचक्रस्थेनजीवेन ॥ ३० ॥ देहचक्रकंदेहपरंपराचक्रम् ॥ ३१ ॥ प्रतीतित सन्नपिपरमार्थत असन् ॥ असत्येनाज्ञानादिनाकृतयस्माद्धेतोः ॥ ३२ ॥ ३३ ॥ तत्कृतनैवोच्यतेयदेतिशेष. ॥ चेतनवज्जडेअपराधारोपादर्शनादित्यर्थ ॥ ३४ ॥ इच्छातोहिकर्तृत्वस्यात्सातुनजडेदेहेनिर्विकारेआत्मनिवासभवतीत्याह ॥ निरीहइति ॥ ३५ ॥ अकर्त्रात्मनिश्चयफलमाह ॥ यथेति ॥ ३६ ॥ तर्हिकथराज्यसस्थितिसिद्धिस्तत्राह ॥ यथेति ॥ ३७ ॥ देहसत्यतादर्शनेतुतदभिमानलक्षणाहंकारस्या

यथापश्यतिदिक्चक्रंभ्रमदत्यंतमोहितः॥ अकस्मादेवरूढेनमिथ्याज्ञानेनवल्गता॥ २९॥ तत्रस्थेनतथैवेदंदृश्यतेदेहचक्रकम्॥ भ्रमितं चभ्रमद्रूपंपतद्रूपंप्रपातितम् ॥ ३० ॥ हतंचहन्यमानंचदृश्यतेदेहचक्रकम्॥ धीरतामलमालंब्यघनभ्रममिमंत्यजेत्॥३१ ॥ संकल्पेन कृतोदेहोमिथ्याज्ञानेनसन्नसन्॥ असत्येनकृतंयस्मान्नतत्सत्यंकदाचन॥ ३२॥ असदभ्युत्थितोदेहोरज्ज्वामिवभुजंगधीः॥ असत्या मेवसत्यांचकरोत्यपिजगत्क्रियाम्॥ ३३॥ जडेनरामक्रियतेयन्नतत्कृतमुच्यते॥ कुर्वन्नपितदादेहोनकर्ताक्वचिदेवहि॥ ३४॥ निरीहो हिजडोदेहोनात्मनोस्याभिवांछितम्॥ कर्त्तानकश्चिदेवातोद्रष्टाकेवलमस्यसः॥ ३५॥ यथादीपोनिवातस्थःस्वात्मन्येवावतिष्ठते॥ सा क्षिवत्सर्वभावेषुतथातिष्ठेज्जगत्स्थितौ॥ ३६॥ यथादिवसकर्माणिभास्करःखेस्थएवसन्॥ करोत्येवमिमांरामकुरुपार्थिवसंस्थितिम् ॥ ३७॥ अस्मिन्नसन्मयेदेहगृहेशून्येसमुत्थिते॥ सत्तामुपगतेमिथ्याबालकल्पितयक्षवत्॥ ३८॥ कुतोप्यागत्यनिःसारःसर्वसज्जनव र्जितः॥ अहंकारःकुवेतालःप्रविष्टश्चित्तनामकः ॥ ३९॥ अस्यमाभृत्यतांगच्छत्वमहंकारदुर्मतेः ॥ अस्यभृत्यतयारामनिरयःप्राप्यते फलम्॥ ४०॥ स्वसंकल्पविलासेनदेहगेहेदुराकृतिः॥ उन्मत्तचित्तवेतालःपरिवल्गतिलीलया ॥ ४१ ॥ शून्यंदेहगृहंप्राप्यचित्तयक्षेण तत्कृतम्॥ भीतायेनमहांतोपिसमाधिनियताःस्थिताः॥ ४२॥ चित्तवेतालमुद्वास्यस्वशरीरकमंदिरात्॥ संसारशून्यनगरेनबिभेतिक दाचन॥ ४३॥ चित्तभूताभिभूतेस्मिन्येशरीरगृहेरताः॥ चित्रमद्यापितेकस्माद्घटिताआत्मवत्स्थिताः ॥ ४४ ॥ ग्रस्तेचित्तपिशाचेनदेह सद्मनियेमृताः॥ पिशाचस्यैवयाबुद्धिर्नापिशाचस्यराघव॥ ४५॥

वर्जनात्तद्भृत्यतास्यादेवेत्याह ॥ अस्मिन्नित्यादिना ॥ ३८ ॥ प्रविष्टःस्यादितिशेष ॥ ३९ ॥४० ॥ सत्यहंकारेअनर्थातरमप्याह॥ स्वसंकल्पेत्यादिना ॥४१ ॥ ४२ ॥ ४३ ॥ देहगृहेरताआसक्तास्तेअनंतकोटिदेहेपुनष्टेपुअद्यापिदेहेनआत्मवत्तादात्म्येनघटिताःकस्मात्स्थिताः ॥ सदैवतद्घटनदुःखेअनुभूयमानेपितद्विघटनेयत्नंनकुर्वंतितच्चित्रमित्यर्थ ॥ ४४ ॥ येमृतास्तेषामितिशेष. ॥ ४५ ॥

---

१ स्वच्छइत्यपिपाठ.

दीप्तसंतापभयपक्षिरग्धेशरीरकेआस्थयाविहरन्नापुरुष पिशाचएवेतिविभक्तिविपरिणामेनानुपज्यते ॥ तथास्याकुतोनयुक्तातमाह ॥ नत्विति ॥ ४६ ॥ अथममहंकारस्यानु
मरतांमृत्पतात्यक्तातनोयोगभूमिकाभ्यासावहंकारस्यअस्मृतिआत्यंतिकविस्मृतिंप्राप्य ॥ ४७ ॥ नमित्राणीति ॥ अहंकारिणाविनयवीर्लभ्यावौद्धत्यावश्यभावाच्चनकश्चि
त्मित्रमस्तीतिभाव ॥ ४८ ॥ फलफल्गुहजनवैरादिरूपमतएवमरणात्मकम् ॥ ४९ ॥ ५० ॥ तस्यपरलोकेपिदुःखमेवेत्याह ॥ अहंकारेति ॥ ५१ ॥ यस्यस्वदेहपादपस्यकोटरे

अहंकारग्रहग्रस्तगृहेदग्धशरीरके ॥ विहरन्नास्थयासाधोनतुवेतत्किलस्थिरम् ॥४६ ॥ अहंकारानुस्मरतांत्यक्त्वाविततयाधिया ॥ अहं
कारास्मृतिंप्राप्यस्वात्मैवाश्ववलंब्यताम् ॥ ४७॥ अहंकारपिशाचेनग्रस्तायेनिरयैपिण ॥ तेषांमोहमदांधानानमित्राणिनबांधवा ॥
॥४८॥अहंकारोपहतयाबुद्ध्यायाक्रियतेक्रिया॥विषवल्ल्याइवफलतस्या स्यान्मरणात्मकम्॥ ४९॥विवेकधैर्यहीनेनस्वाहंकारमहोत्स
व ॥मूर्खेणालम्बितोयेननष्टमेवाशुविद्धितम्॥५०॥अहंकारपिशाचेनवराकायेवशीकृता ॥ तएतेनरकाग्नीनांराघवेंधनतांगता ॥५१॥
अहंकारोरगोयस्यपरिस्फूर्जतिकोटरे॥स्वदेहपादपोऽधीरैरचिरेणनिपात्यते॥५२ ॥अहंकारपिशाचोस्मिन्देहेतिष्ठतुयातुवा॥त्वमेनमा
लोकयमामनसामहतांवर॥५३॥ अवधूतोप्यवज्ञातश्चेतसैवतिरस्कृत ॥अहंकारपिशाचस्तेनेहकिंचित्करिष्यति॥५४॥ देहालयेस्फुर
त्यस्मिन्रामचित्तपिशाचके॥ अस्यानंतविलासस्यकिमिवागतमात्मन ॥ ५५॥ चित्तयक्षाभिभूतानांयापुंसांविततापद ॥ शक्यते
परिसंख्यातुनतावर्षशतैरपि ॥ ५६ ॥ हाहामृतोस्मिदग्धोस्मीत्येतावेतु खवृत्तय ॥ अहंकारपिशाचस्यशक्तयोन्यस्यनानघ ॥ ५७॥ स
र्वगोपियथाकाश सबधोनेहकेनचित् ॥ सर्वगोपितथैवात्मानाहंकारेणसंगत ॥ ५८॥ यत्करोतियदादत्तेदेहयन्त्रमिदंचलम् ॥वातरज्जु
युतंरामतदहंकारचेष्टितम् ॥ ५९ ॥

न्दविसस्यदेहपादप ॥ बहुपेक्षणनंजात्यैस्यात ॥ अधीरैरितिच्छेद ॥ ५२ ॥ मामालोकय ॥ ५३ ॥ अनवलोकनमात्रेणाकिंस्यात्तमाह ॥ अवधूतइति ॥ ५४ ॥ आत्म
नस्तदनुसरणारेवानय उपेक्षितस्तस्यितोप्यकिंचित्करइत्याह ॥ देहालयेइति ॥ ५५ ॥ चित्तेतिप्रकृताहंकारस्यैववस्त्वंतरेप्यनर्थकारितास्यानायमिर्देशः ॥ ५६ ॥ ५७ ॥
अहंविस्मातीवानुगृणतइतिनैयायिकादीनांभ्रांतिवारयति ॥ सर्वगइति ॥ सबध्यतइतिसंबधत्तस्तिरहंत्वर्थ ॥ ५८ ॥ वातरज्जुप्राणात्मापाश ॥ ५९ ॥

यद्यहंकारएवसर्वचेष्टानिमित्तंनात्मातर्हिकेनेषितंपततिप्रेषितंमनः केनप्राणःप्रथमःप्रैतियुक्तः ऊर्ध्वंप्राणमुन्नयत्यपानंप्रत्यगस्यति मध्येवामनमासीनंविश्वेदेवाउपासतेइत्यादिश्रुतिविरोधस्तत्राह ॥ वृक्षोत्पत्ताविति ॥ आत्मसस्थःस्वेमहिम्निप्रतिष्ठितःकारणश्रुतिभिरुपचर्यतइत्यर्थः ॥ ६० ॥ उपचारेमनआदीनामत्तास्फूर्तिप्रदत्वमेवनिमित्तमित्याह ॥ आत्मेति ॥ आत्तवपुर्लब्धसत्ताककल्पितस्थूलदेहंच ॥ ६१ ॥ प्रकटाधयोश्चिज्जडयोः ॥ ६२ ॥ नन्वसबधेमनआदेःसत्तास्फूर्त्यसिद्धिः सबधेत्वात्मासगत्वासिद्धिरित्याशक्याह ॥चपलेति॥ चपलस्पदनानीरयतिप्रेरयतीतिचपलस्पदनेरास्तथाविधाभिरात्मनःप्राणस्यशक्तिभिरावृतवशीकृतचित्ततादात्म्याध्यासलक्षणेनमौर्ख्येणाज्ञानेनदृश्यतेनवस्तुव

वृक्षोत्पत्तौयथाहेतुरकर्त्रपिकिलांबरम् ॥ आत्मसंस्थस्तथेहात्माचित्तचेष्टासुकारणम् ॥ ६० ॥ आत्मसन्निधिमात्रेणस्फुरत्यात्तवपुर्मनः ॥ दीपसन्निधिमात्रेणकुड्यरूपमिवामलम् ॥ ६१ ॥ अपिविश्लिष्टयोरामनित्यमेवात्मचित्तयोः ॥ द्यावापृथिव्योरिवकःसंबंधःप्रकटांधयोः ॥ ६२ ॥ चपलस्पंदनेराभिरात्मशक्तिभिरावृतम् ॥ चित्तमात्मेतिमौर्ख्येणदृश्यतेरघुनंदन ॥ ६३ ॥ आत्माप्रकाशरूपोहिनित्यःसर्वगतोविभुः ॥ चित्तंशठमहंकारंविद्धिहार्दंबृहत्तमः ॥ ६४ ॥ आत्मासिवस्तुतस्त्वंहिसर्वज्ञोनमनोभ्रशम् ॥ दूरेकुरुमनोमोहंकिमेतेनाभिसंगतः ॥ ६५ ॥ पिशाचोपिमनोरामशून्यदेहगृहेस्थितः ॥ भावयत्येषदुष्टात्मामौनमुत्तमसंस्पृशन् ॥ ६६ ॥ भवप्रदमकल्याणंधैर्यसर्वस्वहारिणम् ॥ मनःपिशाचमुत्सृज्ययोसिसत्वंस्थिरोभव ॥ ६७ ॥ चित्तयक्षदृढाक्रांतंनशास्त्राणिनबांधवाः ॥ शक्नुवंतिपरित्रातुंगुरवोनचमानवम् ॥ ६८ ॥ संशांतचित्तवेतालंगुरुशास्त्रार्थबांधवाः ॥ शक्नुवंतिसमुद्धर्तुंस्वल्पपंकान्मृगंयथा ॥ ६९ ॥ अस्मिञ्जगच्छून्यपुरेसर्वमेवप्रदूषितम् ॥ देहगेहंप्रमत्तेनचित्तयक्षेणवल्गता ॥ ७० ॥ चित्तवेतालवलितासमस्तादेहखंडजा ॥ इयंजगदरण्यानीशून्याकस्यनभीतये ॥ ७१ ॥ जगन्नगर्यामस्यांतुशांतचित्तपिशाचकम् ॥ देहगेहंकतिपयैःसेव्यतेसद्भिरेवयत् ॥ ७२ ॥ इहसंश्रूयतेयायादिक्सैवरघुनंदन ॥ प्रमत्तमोहवेतालैःपूर्णादेहश्मशानकैः ॥ ७३ ॥ अस्यांजगदरण्यान्यांमुह्यंतंमुग्धबालवत् ॥ स्वयमाराध्यधैर्यांशमात्मनात्मानमुद्धरेत् ॥ ७४ ॥ जगज्जरदरण्येस्मिञ्श्वरद्भूतमृगव्रजे ॥ धृतितृणरसैराममागच्छमृगपोतवत् ॥ ७५ ॥ अस्मिन्महीतलारण्येचरंतिमृगपोतकाः ॥ त्वमज्ञानगजंभुक्त्वासैंहींवृत्तिमुपाश्रय ॥ ७६ ॥

त्तेनेत्यर्थः ॥ नाभिरितिपाठेचित्तविशेषणम् ॥ ६३ ॥ असगत्वोपपादनायविरुद्धत्वमेवप्रपंचयति ॥ आत्मेति ॥ शठंवंचकम् ॥ ६४ ॥ ६५ ॥ हेउत्तममनःपिशाचआत्मानमसंस्पृशन्नपिमौनतूष्णीमेवस्वसंस्पृष्टभावयतीत्यन्वयः ॥ ६६ ॥ ६७ ॥ ६८ ॥ सशातेति ॥ शुद्धचित्तमितियावत् ॥ मृगमृगसदृशंवत्सम् ॥ ६९ ॥ ७० ॥ देहलक्षणेखडेपरिच्छिन्नभागेजाता ॥ ७१ ॥ समस्तेत्युत्सर्गःक्वचिदन्यथात्वमपियतोदृष्टमित्याह ॥ जगदिति ॥ यत्यतः ॥ ७२ ॥ अतएवाज्ञदेहाःश्मशानतुल्याइतिनिदति ॥ इहेति ॥ ७३ ॥ धैर्यांशमाराध्यदृढमवलब्य ॥ ७४ ॥ तृणसदृशैरसारैर्विषयरसैर्धृतिकृतार्थताबुद्धिम् ॥ ७५ ॥ मृगपोतकसदृशाअन्येमूढाविषयतृणानिचरतिचेच्चरतुनाम ॥ ७६ ॥

॥ ७७ ॥ ननुबधुजनै समानशीलतयासंवेवावस्थानसुखदृष्टतमकोदायस्तमाह ॥ अत्यल्पेति ॥ विशेषणान्युभयमयोज्यानि ॥७८॥७९॥ नमक्तस्यमासक्तिकर्दमेदतिशेष ॥
पतलम्ममर्यादातालक्षणाशङ्कीकोपनासुराणाराक्षसीस्वावर्तीत्यर्थ ॥ ८० ॥ अन्येनकमणा ॥ यक्षेणाहकारेण ॥ अन्यस्यमनस ॥ अन्योजीव ॥ मौख्यस्यपक्रिकापरि
वतमानापरपराविभाआम्बर्यरूपेत्यर्थ ॥८१॥ सेवकपनत्वादपिनात्मनिबु स्वतन्त्रोगभोक्तृशरीरादिरूपातराधकाशइत्याशयेनाह ॥ यथेत्यादिभिभि ॥ इतरस्यसद्रूपेतररूपस्य
सदितरत्वस्यैवअसदलीकादिपदैर्प्रसिद्धरितिभाव ॥ ८२ ॥ यथाउपलस्यघनताकाठिन्यनोपलात्पृथक्सतीतथामानससमष्टिव्यष्टिमन समूह आदिपदात्तत्कार्यस्थूलप्रपञ्च

अन्येनरम्हगामुग्धाजंबूद्वीपेस्वजगले ॥ विहरंतियथारामतथामाविहरानघ ॥ ७७ ॥ अत्यल्पकालशिशिरेकर्दमालेपदायिनि ॥ नमक्त
व्यंयधुरूपेमहिषणेवपल्वले ॥ ७८ ॥ भोगाभोगाग्रहिष्कार्यांआर्यस्यानुसरेत्पदम् ॥ प्रविचार्यमहार्थस्वमेकमात्मानमाश्रयेत् ॥ ७९ ॥
अपविम्रस्यतुच्छस्यदुर्भगस्यकुराकृते ॥ देहस्यार्थेनमंतव्यचिंताचहीसुदारुणा ॥ ८० ॥ अन्येनरचितोदेहोयक्षेणान्येनसश्रित ॥ दु
खमन्यस्यभोक्तान्यश्चित्रेयंमौख्यचक्रिका ॥ ८१ ॥ यथैकरूपापनताद्दपदोस्यात्मनस्तथा ॥ सत्तामात्रैकसामान्यादितरस्याप्यसभ
वात् ॥ ८२ ॥ यथोपलस्यघनतामानसादितथात्मन ॥ सत्तामात्रादभिन्नत्वादभावादस्यसस्थिते ॥ ८३ ॥ यथोपलस्योपलताघटस्य
घटतायथा ॥ सत्तामात्रादभिन्नैवमानसादितथात्मन ॥ ८४ ॥ अत्रेमामपरांदृष्टिंमहामोहविनाशिनीम् ॥ शृणुयाकथितापूर्वममकै
लासकंदरे ॥ ८५ ॥ संसारदु खशांत्यर्थंदेवेनार्धेंदुमौलिना ॥ अस्तीदुकरसंभारभासुरभारगोदिव ॥ ८६ ॥ कैलासोनामशैलेंद्रोगौरी
रमणमदिरम् ॥ तत्रास्तेभगवान्देवोहरश्चन्द्रकलाधर ॥ ८७ ॥ तंपूजयन्महादेवंतस्मिन्नेवगिरौपुरा ॥ कदाचिदवसगंगातटेविरचिता
श्रम ॥ ८८ ॥ तपोर्थंतापसाचारेचिरायरचितस्थिति ॥ सिद्धसंघातवलितश्रुतशास्त्रार्थसंग्रह ॥ ८९ ॥ पुष्पार्थस्यूतपुटिक पुस्तकव्यूह
संग्रही ॥ एवगुणविशिष्टस्यकैलासवनकुंजके ॥ ९० ॥ तप प्रचरतोराममकालोत्यवतत ॥ अथैकदाकदाचित्तुबहुलस्याष्टमेदिने ॥ ९१ ॥

ञ्च ॥ तन्नुक्त ॥ सत्तामात्रस्वभावादभिन्नत्वात्पृथक्असत्यमानसादे सस्थितेरभावाविस्यथ ॥ ८३ ॥ अथचम्यायश्नस्येकघटतन्मानसवस्थाविष्यपियोप्यम इतिसर्वद्वैतमेवप्रसि
द्धमित्याह ॥ यथेति ॥ ८४ ॥ अभास्मिन्नर्थेदृर्मांवक्ष्यमाणमानसशिवपूजालक्षणांदृष्टिंशृणु ॥ ८५ ॥ तमादौकैलासवर्णनमुखेनकथाप्रस्तौति ॥ अस्तीत्यादिना ॥ इदुकराणां
संभार सपातद्वचभासुर ॥ ८६ ॥ ८७ ॥ ८८ ॥ तापसैराचयनदतिभापसाचार कृच्छ्रचांद्रायणादिस्तस्मिन्नियतास्थितिर्यस्यतथाविध सन् ॥ ८९ ॥ ९० ॥ बहुलस्यकृष्णस्य
श्रावणपक्षस्याष्टमेदिने ॥ ९१ ॥

रात्रश्येमुखेप्रदोपेपूजाजपध्यानादिनाक्षयमागतेसति ॥ प्राणिसंचाराद्युपरमात्संशांतरूपासुदिक्षुकरादिचेष्टयाप्यर्थानिवेदनंकाष्ठमौनव्रततत्रस्थितास्विव ॥ १२ ॥ गहनेषुवने
षु ॥ १३ ॥ तनुतांईषद्बहिःप्रवणतामितियावत् ॥ १४ ॥ स्मयात्विस्मयात् ॥ १५ ॥ बहिर्दृष्ट्या अवलोकितमतर्विचारितमित्यर्थः ॥ विचार्यचयावत्तपुरस्थसानुंप्रस्थदेशपश्यामिताव
त्तत्रप्राप्तइत्यर्थः ॥ १६ ॥ सुसंयत सावधानः ॥ १७ ॥ सुमनाःसंतुष्टमनाः ॥ पुरःपुरोदेशम् ॥ १८ ॥ सम्यक्साष्टांगप्रणम्याभिवंदित.स्तुत ॥ स्वभाग्यमहोदयस्वस्मिंस्तदनुग्रह

गतेश्रावणपक्षस्यरात्र्यग्रेक्षयमागते ॥ दिक्षुसंशांतरूपासुकाष्ठमौनस्थितास्विव ॥ १२ ॥ खद्योतद्योतितध्वांतकारेषुकुंजेषुगहनेषुच ॥ एतस्मि
न्नंतरेतत्रयामार्धेप्रथमेगते ॥ १३ ॥ समाधितनुतांनीत्वास्थितोहंबाह्यमप्रदृक् ॥ अपश्यंकाननेतेजोझटित्येवसमुत्थितम् ॥ १४ ॥ शु
भ्राभ्रशतसंकाशंचंद्रबिंबगणोपमम् ॥ प्रकटीकृतदिक्कुंजंतदालोक्यमयास्मयात् ॥ १५ ॥ अंतःप्रकाशशालिन्याबुद्धिदृष्ट्यावलोकित
म् ॥ यावत्पश्यामितंसानुंप्राप्तश्चंद्रकलाधरः ॥ १६ ॥ गौरीकरार्पितकरोनंदिप्रोत्सारिताग्रगः ॥ शिष्यान्संबोध्यतत्रस्थान्गृहीत्वार्घ्यंसु
संयतः ॥ १७ ॥ अगमंसुमनास्तस्यदृष्टिपूतमहंपुरः ॥ तत्रपुष्पांजलिंदत्वादूरादेवत्रिलोचनः ॥ १८ ॥ दत्तार्घ्येणमयादेवःसंप्रणम्याभिवं
दितः ॥ ततश्चंद्रप्रभासख्याकृज्याशीतलयातया ॥ ९९ ॥ दृशासर्वार्तिहारिण्याचिरमस्म्यास्पदीकृतः ॥ पुष्पसानूपविष्टायतस्मैत्रैलोक्य
साक्षिणे ॥ १०० ॥ अर्घ्यंपुष्पंतथापाद्यमभ्युपेत्यार्पितंमया ॥ मंदारपुष्पांजलयोविकीर्णाबहवःपुरः ॥ १०१ ॥ नानाविधैर्नमस्कारैःस्तो
त्रैश्चाभ्यर्चितःशिवः ॥ ततोभगवतीगौरीतादृश्यैवसपर्यया ॥ २ ॥ संपूजितासखीयुक्तागणमंडलिकातथा ॥ पूजांतेपूर्णशीतांशुरस्मिशी
तलयागिरा ॥ ३ ॥ तत्रोपविष्टंप्रोवाचमामर्द्धेंदुकलाधरः ॥ ब्रह्मन्प्रशमशालिन्यःप्राप्तविश्रांतयःपरे ॥ ४ ॥ कच्चित्कल्याणकारिण्यःसंवि
दस्तेस्थिताःपदे ॥ कच्चित्तपस्तेनिर्विघ्नंकल्याणमनुवर्त्तते ॥ ५ ॥ कच्चित्प्राप्यमनुप्राप्तंकच्चिच्छाम्यंतिभीतयः ॥ एवंवादिनिदेवेशेसर्वलो
कैककारिणि ॥ ६ ॥ गिरानुनयशालिन्यामयोक्तंरघुनंदन ॥ त्र्यक्षानुस्मृतिकल्याणवतामिहमहेश्वर ॥ ७ ॥ नकिंचिदपिदुष्प्रापंनचकाश्च
नभीतयः ॥ त्वदनुस्मरणानंदपरिघूर्णितचेतसाम् ॥ ८ ॥ नतेसंतिजगत्कोशेप्रणमंतिनयेषुनः ॥ तेदेशास्तेजनपदास्तादिशस्तेचपर्वताः ॥ ९ ॥

दृष्टिपातवर्णयति ॥ ततइति ॥ तयास्वानुभूतालौकिकनिरतिशयानंदाविर्भावचमत्कारकारिण्या ॥ ९९ ॥ १०० ॥ अभ्युपेत्यअभिमुखंसमीपेगत्वा ॥ १०१ ॥ तादृश्याशि
वपूजासदृश्यासपर्ययापूजया ॥ २ ॥ ३ ॥ तदाज्ञयातत्रसानावुपविष्टंमाम् ॥ तत्रकुशलप्रश्नेकर्त्तव्येसर्वकौशल्यपरमकाष्ठापरमात्मनिचित्तविश्रांतिमेवभगवान्प्रथममनुजिघृक्ष
यापृच्छति ॥ ब्रह्मन्निति ॥ ४ ॥ संविदश्चित्तवृत्तयः ॥ पदेपरमात्मवस्तुनि ॥ ५ ॥ ६ ॥ अनुनयोविनयस्तच्छालिन्या ॥ ७ ॥ ८ ॥ जगत्कोशेतेप्राणिनोनसंतियेनप्रणमंति ॥ सर्वे
पिप्रणमंत्येवेत्यर्थः ॥ तेदेशाःप्रशस्ततमाइत्यर्थः ॥ अपशवोवाअन्येगोअश्वेभ्यःपशवोगोअश्वाइतिवत्प्राशस्त्यलाभः ॥ ९ ॥

